श्रीः ।

# अब्धिनौयानमीमांसा.

श्रीकाशीशेषवेङ्कटाचलशास्त्रिणा

विरचिता.

इयं च

क्षेमराज श्रीकृष्णदासश्रेष्ठिना

**मुम्बय्यां**

स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) वर्णयन्त्रालये

मुद्रयित्वा प्रकाशं नीता.


संवत् १९५९, शके १८२४.

# समर्पणम् ।

श्रीमन्माधवसिंहभूपतिमणे सद्धर्मरक्षाऽऽदरिन्
नानासद्गुणरत्नहारवलयिन्सद्धीसहायात्मक ॥
राजंस्त्वां शरणं गतेन हि मया नत्वोपहारीकृतो
ग्रन्थोऽयं बहुभिः सुदामसदृशोऽभूवं नृकण्ठीरव ॥१॥
ग्रन्थोऽयं क्षेमराजेन कृष्णदासार्थसूनुना ॥
समर्पितो भूमिपतेरधिकानन्ददायकः ॥ १ ॥

श्रीमतां महाराजानां पूर्णप्रेमाभिकाङ्क्षी–

खेमराज श्रीकृष्णदास,

"श्रीवेङ्कटेश्वर" ( स्टीम् ) यंत्र मुद्रणालयाध्यक्ष–मुंबई.



# प्रस्तावना।

अस्ति चेदानीमतिप्रबलैव बालस्यापि कलेः प्रवृत्तिरिति लोकास्तत्रापि द्विजा अतीव दुरवस्थामनुप्राप्य स्वस्वपरिपूर्ण-धर्मानुष्ठाने तन्नाम्नां ज्ञानसंपादने वा जन्मन्येव पुत्रपौत्रादिवंश-परम्परायामेव वा स्वस्वोदरभरणकृत्य एव विश्रान्त्या समयस्या-नुपलम्भादसकृदुत्तरोत्तर कष्टपरम्परामल्पेषु महत्स्वपि सर्वत्र कार्येष्वनुभवन्तः स्वस्वतेजोहीना अपमानमेव परितः प्राप्नुवन्तः परस्परद्वेषिणस्ततस्ततोप्यतीव दुरवस्थामनुभवन्तो भयङ्करमपि परधर्ममेवधर्मं मन्यमाना अत्यल्पधनाअपि तानपि यथावदना-श्रयन्तोऽजागलस्तनतुल्यामाश्रयामहे । परन्त्वत्र मूलं न कलिः किन्तु वयमेव कोट्यन्तरसंख्याः कलयः । यतः कलि-धर्मव्यवस्थाप्रवृत्तेन पराशरमहर्षिणापि "युगरूपा हि ते द्विजाः" इत्यूचे ॥ तस्मादवश्यं जागरूकैरस्माभि-रिदानीं स्वापदुद्धरणे यत्नान्तरानवकाशात्प्रत्यन्त देशगमनमनेकविद्यादिसम्पादनाय महाराजाधिराजाश्रयेणैव कार्यम् ॥ तत्र वेदशास्त्रसम्मतिप्रतिपादनायानेकैः कृतेषु ग्रन्थेषु सत्स्वप्यसकृद्बहुभिस्तन्निरूपणंसर्वत्रावश्यकमिति मया निरूपितोऽयमर्थः सफल एवेति विदाङ्कुर्वन्तु सुधियः ।

विद्वत्कृपाभिलाषी—का० । शे० । वेङ्कटाचलशास्त्री.

॥ श्रीरस्तु ॥

श्रीमहागणाधिपतये नमः । श्रीमहासरस्वत्यै नमः ।

श्रीगुरुभ्यो नमः ।

# अथाऽब्धिनौयानमीमांसा प्रारभ्यते ।

## अथ मङ्गलम् ।

सिद्धिबुद्धिसमाश्लेषसञ्जातानन्दशोभितम् ।
नृकुञ्जराकृतिधरं देशिकेन्द्रमुपास्महे ॥ १ ॥

गुरुचरणकमलमनघं पार्वत्यम्बासुपुण्यसौभाग्यम्
श्रीरामकृष्णवश्यं नागेशाभूषणं वन्दे ॥ २ ॥

चिन्तामणेर्विबुधवारवधूसुधानां
धन्वन्तरेः सुसदनं शयनं च विष्णोः ।
श्रीरत्नविद्रुमसुधानिधिसैन्धवाग्र्य-
मुक्तागजाधिपजनेरयनं नमामि ॥ ३ ॥

नमामि वरुणालयं हरिपदारुणाब्जालयं
महावनरसालयं त्रिजगदालयस्यालयम् ।
रमामणिवरालयं वरझषस्थनौकालयं
विपत्त्युपशमालयं गिरिमहासरित्स्वालयम् ॥

# अथ प्रतिज्ञा ।

श्रीकाशीशेषपूर्वेण वेङ्कटाचलशर्मणा ।
विद्वत्कृपाभाजनेन धर्मतत्त्वार्थवेदिना ॥ ५ ॥
आलोच्य धर्मशास्त्राणि वेदभाष्यादिकान्यपि ।
अब्धिनौयानमीमांसा क्रियते बुधतोषिणी ॥ ६ ॥

# अथ विषयविभागानुक्रमणिका ।

खण्डानि चात्र सप्त स्युराद्यं यानमुदन्वति ।
द्वितीयं स्नानसन्ध्यादिनित्यकर्म, तृतीयकम् ॥ ७ ॥
भक्ष्यपेयविचारादि, श्राद्धकृत्यादि तुर्यकम् ।
शिष्टाब्धिनौकायानं स्यात्पञ्चमं षष्ठमुच्यते ॥ ८ ॥
म्लेच्छदेशविचारादि प्रायश्चित्तादि सप्तमम् ।
इत्येवं विषयाः प्रोक्ताः बालसौकर्यसिद्धये ॥ ९ ॥

# तत्रादावुपोद्घात आरभ्यते ।

अथ ( भरतखण्डे ) प्रायः बहवो ( वेदशास्त्रार्थज्ञाः ) सर्वत्र दुरवस्थां दुःखपरम्परासागरनिमग्नानां लोकानां ज्ञा[त्]वा तैः सह स्वयमप्यनुभवन्तस्तदुद्धरणे कमप्युपायमननुपश्यन्तोनुपदिश्यन्तो वा वाङ्मात्रेण मयोच्यमानमुपायं केपि न शृण्वन्तीत्येवमादिरीत्या केवलमाटोपं कुर्वन्तः [...]ीयब्राह्मण्यतेजोविवर्धने निराशाः उत्तरोत्तरं सद्विद्या[...]द्धदुर्विद्यादुष्कृत्यदुस्सङ्गाद्यासक्तमतयः काम-

क्रोधादिपरवशतया "दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान्। (१) मत्तः (२) प्रमत्त (३) श्चोन्मत्तः (४) श्रान्तः (५) क्रुद्धो (६) बुभुक्षितः। (७) त्वरमाणश्च (८) भीरुश्च (९) लुब्धः (१०) कामी च ते दश" इति (रणवीरसिंहकृतप्रायश्चित्तखण्डे) उक्तरीत्या धर्ममधर्ममधर्मं च धर्मं मन्वानाः "(१) उद्वेगजननं (२) हिंसा (३) सन्तापकरणं तथा (४) रुक्कृतिः (५) शोणितकृतिः (६) पैशुन्यकरणं तथा॥ (७) हितस्यातिनिषेधश्च मर्मोद्घाटनमेव च (८) सुखापन्हुति (९) संरोधौ। (१०) वधो दशविधा च सा॥" इति (आग्नेयपुराणे ३७२ अध्याये) उक्तरीत्याऽसूयामात्सर्यादिपरिपूर्णान्तरङ्गतया हिताचरिष्णुविरोधिनस्सन्तो द्वित्रास्त्रिचतुराः पञ्चषा बहवो वा—इदमेव महत्त्वं पाण्डित्यमनितरसाधारणं चेति मत्त्वा परस्परमेकैकस्मिन्नपि विषयेऽल्पेपि वैषम्यमेव प्रतिपादयन्ति नैक्यं कदापि। ततश्च लौकिकालौकिकानि महत्कार्य्याणि कथं वा साधयेयुरिति शङ्कायां मृगतृष्णाम्बुवदेवेत्येव वक्तव्यम्। एवं सति सुन्दोपसुन्दन्यायानुसारिणामेतेषां विचारस्य तन्न्यायानुयायित्वेन तत्फलभूता लोकेषु धर्माधर्मयोर्बाधानिवृत्त्यनिवृत्त्योः प्रजासौख्याभिवृद्ध्यनभिवृद्ध्योश्च व्यवस्थापि तदनुसारिण्येवेति स्थितम्। कार्यस्य कारणानुगुणत्वात्॥

अन्ये च ये विरलाः महान्तो गुणगम्भीरास्तेपि प्रायः सर्वत्रोक्तपण्डितजनप्रसरस्य प्रबलतया कौटिल्यमन्तरोपायान्तरमपर्यालोच्यलोकानामुपदेष्टव्यांशग्रहणतद्धारणतदनुष्ठानश्रद्धादुर्बलतयाऽऽर्जवेन घण्टापथसञ्चरिष्णुतया कुटिलमार्गसञ्चारासहिष्णुतया चौदासीन्यमेवाश्रित्य चोरभ्य इव कुटिलमार्गगामिभ्य एभ्यः किमपि भयमाशङ्कमाना मूकीभावमवलम्बन्ते ॥ तदिदमस्माकमुक्तपण्डितेतरपण्डितलोकानां वा सर्वेषां वा भारतीयानां दौर्भाग्यम् ॥

यद्यपि केचिद्दूरदर्शिनो भरतखण्डस्य पूर्वावस्थापेक्षयाऽद्यतनीमवस्थां पश्यन्ति विलक्षणाम् ॥ यथा-प्रायो बहवो ब्राह्मणाः—मत्सरिणोऽसूयापराः दुःखबाहुल्याकुलाः अलसा ज्ञानदुर्बला निर्लज्जाः स्वस्वसैद्धान्तिकमतभेदमात्रमाश्रित्य कार्यसामान्येपि परस्परं भेदं प्रकल्प्य द्वेषिणोल्पज्ञा अपि बहुज्ञानालक्ष्याक्कुश्य येनकेनेति न्यायेन साहसेन सर्वज्ञतां प्रकटयन्तः प्रशंसन्तो वा प्रायः स्वयं कुत्राप्यसमर्थाःसन्त एव स्वाश्रयराजामात्यादिषु स्वमार्मिकदोषान्प्रकटयेयुरिति भीत्या ग्रन्थैः लौकिकोक्तिभिः ज्योतिषवैद्यव्यवहारैश्च सारासारविवेचकेषु द्वेषिणस्तदपमानकराः सत्यवसरे तद्धन्तारश्च स्युः। किमुत तत्कार्यविघाते इति ।

तथा बहवः प्रायो राजानोपि वेदशास्त्रविमुखाःअत एव स्वयमनभ्यस्यन्तो ब्राह्मणेषु सहजभक्तिश्रद्धाविधुराः पुत्रमित्रकलत्रराज्यादिषु प्राप्ततापत्रयाद्यनिष्टनिवारकजपतपआद्यनुष्ठानसमयेष्वथ वा सङ्कटेष्वेव श्रद्धालवः प्राचीनमहर्षिलोकानां सत्यतपोबलेन स्वीयप्राचीनराजादिलब्धमिष्ट सिद्धिमात्रमनिष्टनिवृत्तिमात्रं च पर्यालोच्य तत्र विशेषितमृषीणांसत्यंतपोबलादिकं चापर्यालोच्यैतेषां वैद्यकार्त्तान्तिक पुरोहितपौराणिकधर्मकर्त्रादिपाशानां विधिविहिततपस्सत्यादिविरुद्धसाहजिकवञ्चनाकौटिल्यादिमद्वाग्वागुराबद्धाः महामहाद्रव्यसाध्यं महापूजा होमदानादिकं कृत्वापि तदुक्तं फललेशमप्यलब्ध्वा विरुद्धमेव फलं लभन्ते । तत उत्तरोत्तरं धर्मब्रह्मद्वेषिणो भूत्वा निश्शङ्कं नीतिधर्मविधुरतया प्रजाः स्वा एव चोरा इव पीडयन्ति न तु शौर्येण नव्यां कामपि दृढां कल्पनां लोकहितां राज्यवृद्धिकरीं वा कुर्वन्ति । यतस्ते वेदतदर्थनीतिधर्मशास्त्रतन्त्रागमलोकव्यवहारज्ञाः महान्तः पण्डिताः प्रायः स्वराज्ये न सन्ति किन्तु कुटिला एवेति ।

तथा प्रायो बहवो वैश्या अपि कृषिगोरक्षावाणिज्यादिस्वीयमुख्यधर्मवृत्ती परित्यज्य द्रोहप्राये एव वाणिज्यमात्रे विश्रान्ताः परवञ्चनादिना द्रव्योपलब्धिमात्रे दत्तदृष्टयो वेदशास्त्राभ्यासविमुखाः शास्त्रविरुद्धकृत्येष्वहम-

हमिकया प्रमर्तमानाः दुर्बलान्पीडयन्तः प्रबलपीडनायापि समयं प्रतीक्षन्तस्तदर्थं गतागतादिना तान्प्रशंसन्तः स्वदुर्दशामसतीं प्रख्याप्य कार्यविशेषं साधयन्त इति ।

तथा प्रायः सर्वे २ व्रात्याः शूद्रा अपि स्वयमेव रहसि दुष्टद्वारा नीचद्वारा वा कामप्यक्षरमालां ज्ञात्वा स्वस्मिन्ब्राह्मण्यं क्षत्रियत्वं वैश्यत्त्वं वा प्रकटयन्ति निर्लज्जाः । तथा केचित्तत्र स्वस्वकर्माणि त्यक्त्वा ब्राह्मणाः क्षत्रिया वैश्याश्च साधवो मन्त्रज्ञा ब्रह्मज्ञाः शतशास्त्रज्ञाः सर्वज्ञाः आकाशे नक्षत्रनामादिकं क्वचिदजानन्तोपि महामहाज्योतिर्विद इति दाम्भिकवृत्त्या महतस्तत्स्वरूपज्ञान्हासधिक्कारादिना निर्भर्त्स्य ब्राह्मणक्षत्रियवैश्यशूद्रधर्मानभिज्ञेषु स्वेषां कर्मभ्रष्टतां पातित्यं वाऽजानत्सु स्वप्रथां प्रथयन्ते।

तथा अनुलोमविलोमजा अपि धर्मकृत्यव्यवस्थापकतामजानन्तोपि राजामात्याधिकारिधनिकादियोग्यतत्तत्स्थानेषु राजामात्याधिकारिधनिकादिभिर्दीयमानमहामानदानपात्रादिव्यवस्थापका भूत्वा स्वसजातीयानेव परस्परमहोरूपमहोरूपामितिन्यायेन प्रशंसन्ते इत्यादिकः—सर्वेषामानुभविक एवायं विषय इति विदितमेव ।

---

१ उक्तश्चायमर्थो ( महाभारतेवनपर्वणि १९० तमाध्यायादौ ) श्रीभागवते १२ स्कन्धे २—३याध्याययोः ) ( महानिर्वाणतन्त्रे )अन्यत्र च ।

तथापि ते सद्गुणाढ्या आस्तिकाः सदाचारसत्कर्मश्रद्धालवः सुनीतिज्ञाः गुर्वाचार्यजनेषु विनीताः, यत्र धनमात्रं न विद्या तत्र विद्यारूपधनाभावप्रयोज्यं दारिद्र्यं यत्र सा न नीतिस्तत्र नीतिरूपधनराहित्यप्रयोज्यं दारिद्र्यं तस्या अपि सत्त्वे तत्र विद्याधनाभावप्रयोज्यं दारिद्र्यं यत्र धननीतिविद्यानां सत्त्वं तत्र सदाचारसत्कर्मानुष्ठानशौर्यतपोधनाद्यन्यतमधनाभावप्रयोज्यं दारिद्र्यं वेत्यादिकं स्वेषु विचिन्त्य सर्वे दरिद्राः सर्वे धनिनो यत्र यद्धनं तत्र तदन्यधनाभावः तत्प्रयोज्यव्यवहारे पराश्रयणं स्वीयधनपरिवर्तनद्वारा कार्यमिति च पर्यालोच्य रजतस्वर्णधनमात्रेण धनित्वमन्यथा दारिद्र्यमित्यज्ञव्यवहार इति मन्यमानाः दीर्घदर्शिनो दीर्घसूत्रपरिपन्थिनो राजमान्याश्च भूत्वा कदाचिन्मिलित्वा किमपि किमप्यसकृद्वा तदातदा हृदयेनाकुटिलेनैकीभूय विचार्य चिरं झटिति वा स्थिरमितरदुर्भेद्यं महामहानीतिज्ञराजामात्यसत्पण्डितादिमण्डलीशिरोलालनीयं दुःखासंश्लिष्टं महत्कार्यं कदाचिद्दुःखदाय्यपि परिणामे बहुसुखदायकमेव कुर्वन्तो महान्तो यशस्विनो दुर्जनकण्टका लोके सन्त्येव विरलतया।

एवं तैरेव समयविशेषमुपलभ्य स्वस्वव्यवहारव्यापारद्वारा चिरसंभृतदुःखदुर्ज्ञानदुर्दैवोपघातादितत्तद्दारिद्र्याद्यापद्भ्यो जगदुद्धृतं सद् असत्पथात्प्रच्याव्यते।

तदेवमनेकदारिद्र्ययुक्तोपि द्रव्यमात्रेण स्वमाढ्यम्मन्यो धनी लोकस्तत्तद्दारिद्र्यनिवारणाय यतितव्यमिति यदा मनुते तदावश्यं भारतखण्डस्थकष्टनिवृत्तिर्भवितेति निश्चित्येदानीन्तनाखर्वगर्वमहापर्वतावरोहणं निर्णीय कृत्वा च सम्भूयोच्चं नीचं वा स्वीयमण्डले समानं यदा मनुते, तथा सर्वेषां धनकनकादिकमस्मदीयमेव न तदीयमेवेति न दरिद्रा वयमिति वसुमात्ररहिता अपि यदा मन्वते, तदैव पूर्वोक्तरीत्या महत्कार्यं किमपि कुर्युस्तदैवैतद्धनिराजादिकानां द्रव्यधनाद्यैश्वर्यमपि स्थिरं स्यादिति ज्ञेयमिति दिक् ।

तस्मात्तादृशैकमत्यन्यूनतासम्पादकानिष्टनिवृत्तये "( १ ) देशाटनं ( २ ) पण्डितमित्रता च ( ३ ) वाराङ्गना (४) राजसभाप्रवेशः । (५) अनेशास्त्रार्थविचिन्तनं च चातुर्यमूलानि भवन्ति पञ्च।" इति अभियुक्तोक्तनीत्यनुसारेण तथा "श्रद्दधानः शुभां विद्यामाददीतावरादपि । अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ २३८ ॥ विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् । अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥२३९॥ स्त्रियो रत्नान्यथो विद्या धर्मः शौचं सुभाषितम्।विविधानि च शिल्पानि समादेयानि सर्वतः॥२४०॥ अब्राह्मणादध्ययनमापत्कालेविधीयते । अनुव्रज्या च शुश्रूषा यावदध्ययनं

गुरोः ॥ २४१ ॥ नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं चरेत्" इति ( मनुना २ ध्याये ) "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्याय मन्त्रिषु" इति ( मेदिन्यां ) " निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ॥८६॥" इति ( ना० लि० ३ ) " तीर्थे ये" इति ( पाणिनितन्त्रे । ६ । ३ । ८७ ) इति "समानतीर्थे वासी" इति ( पाणिनितन्त्रे । ४ । ४ । १०७ ) च गुरावागमे शास्त्रे च तीर्थशब्दःप्रसिद्ध एवेति तत्रेदानीं विद्याकलाशास्त्रागमजन्यप्रमाज्ञाननिमित्तकयात्रापि तीर्थयात्रैव भवति । आगमो नाम शब्दप्रमाणम् । प्रमाणं नाम प्रमाज्ञानसाधनम् । तत्र शब्दजन्यप्रमाज्ञानसाधनता च साधनसाध्ययोस्साक्षात्क्रिययान्वयव्यतिरेकाभ्यां निश्चेतव्या । ततश्च साधनं विद्याकलादि साध्यं प्रमाज्ञानं यदनन्तसुखप्रयोजकमिति समुदितयोर्विद्याकलाप्रमाज्ञानयोर्ज्ञानं सुलभं सर्वत्राङ्गलादिदेश एवेदानीमिति तदर्थिका यात्रापि तीर्थयात्रैवेत्येतद्विषये "समुद्रयातुः स्वीकारः" इति (बृहन्नारदीये ) "समुद्रेऽब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इति ( आदित्यपुराणे ) चोक्तस्य निषेधस्य न प्रवृत्तिः । उभयत्र रूढत्वेन न गौणमुख्यादिन्यायावतारः ।

न च तीर्थशब्देन ऋष्यादिजुष्टगङ्गादिजलाश्रय-

वत्प्रदेश एव ग्राह्य इति वाच्यम् । विनापवादं सङ्कोचकल्पनस्यायुक्तत्वात् ॥

एवं च लक्षान्तरजातीयविद्याशिल्पयन्त्रतन्त्रादिचमत्कृतिमूलस्थानभूतेङ्गलेण्डेमेरिकाजर्मन्यादितत्तद्देशगमनं तथा तत्तद्विद्वत्परिचयमन्तरा तच्चमत्कारज्ञानं ततस्तत्संपित्सा ततस्तेषां स्वस्वदेशे प्रसारणोपायादिकं शुद्धराजनीत्यादिकं नानानव्यनव्यमहातिमहाल्पात्यल्पयन्त्रोत्पादनज्ञानादिकं च न भवति । ततोत्रत्यमहामहाराजधनिकसमूहाद्याश्रयेण सहस्रशःसहस्रशो गत्वागत्वा विद्यानानायन्त्रादिकमभ्यस्य तत आगत्य स्वदेशे तत्प्रसरणे सत्येव स्वदेशेषु स्थिरं सौख्यं दारिद्र्यनाशःस्थिरप्रतिष्ठा दुर्व्ययनिरोधो वञ्चनासूयामात्सर्यादिनाश ऐकमत्यं निश्चिन्तता पुनःपुनः सुखोत्पादकप्रतिभासहस्रान्तरोत्पत्तिरनृणित्वमित्यादिसुगुणादिग्रामसम्पन्नाः सर्वाः प्रजा भवेयुः । ततः स्वस्ववर्णाश्रमधर्मपरिपालनमधर्मप्रसारनिरोधश्च स्यान्नान्यथा॥

न च "पण्डितस्यापि शूद्रस्य शास्त्रज्ञानरतस्य च । वचनं तस्य न ग्राह्यं शुनोच्छिष्टं हविर्यथा" इति ( चतुर्विंशतिमते ) इति "दुःशीलोपि द्विजः पूज्यो न शूद्रो विजितेन्द्रियः । कः परित्यज्य गां दुष्टां दुह्यात्क्षीरवतीं खरीम् ॥ २९॥ " इति (पराशरेण ८माध्याये ) च शूद्रवचनमेव न

श्रोतव्यमित्युक्तेः कुतश्चातुर्वर्ण्यबाहिर्भूतवचनस्य ग्राह्यतेति वाच्यम्। परिषत्त्वं शूद्रस्य नेत्यर्थप्रदर्शनार्थं तद्वचनस्य प्रवृत्तेः। तत्रावतरणे ( माधवीये ) एवमेवोक्तत्वात्।

न च "शूद्रान्नं शूद्रसम्पर्कं शूद्रेण तु सहासनम्। शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत्" इति (पराशरेण १२ शाध्याये ३४ श्लो० ) उक्तेः शूद्रादेव ज्ञानसम्पादने निषिद्धे ततोन्यस्मात्तत्सम्पादनं निषिद्धतरमिति वाच्यम्। प्राय इह खण्डे तिष्ठतस्सर्वस्याप्यन्यस्मादेव क्वचिद्विद्याकलादिज्ञानसंपादने प्रवृत्तेस्स्वस्वानुभवसिद्धत्वेन तत्परिहारस्योभाभ्यामपि वक्तव्यत्वात् ॥ "पुराणादिश्रवणादिजातधर्माधर्मविवेकात्प्राज्ञाच्छूद्राद्धर्माधर्मप्राप्तिर्ज्ञानागमः" इति ( तत्रैव माधवाचार्यैः ) उक्तेस्तादृशज्ञानविषयत्वाच्च ॥ अत्रेदानीं ब्राह्मणैः क्षत्रियैः वैश्यैः शूद्रैर्वा केन वैकेन स्वेन स्वपुत्रेणान्येन वा विधिविहिते धर्मसमूहे यदा कदा वैकस्मिन्नपि दिने स्वीयो धर्मस्तद्दिनप्राप्तः कियान्क्रियते, तथा दिने तस्मिन्नेव तेनैवाधर्माचरणं कियत्क्रियते इति विलिख्य स्वयं गणयित्वा संशोध्य पृथक् पृथक् जानाति तदा न्यूनाधिक्यं पापपुण्ययोर्व्यक्तं भवेत् । तथा सतीदानीं तदीयं शि

---

( १ ) "शिष्टाः खलु विगतमत्सरा निरहङ्काराःकुम्भीधान्या अलोलुपा दम्भदर्पलोभमोहक्रोधाविवर्जिताः" इति ( भगवान् बोधायनः ) तथा

ष्टत्वमल्पसत्कर्मकर्तुरपेक्षयाधिकसत्कर्मकरणमात्रेणतद-भिमानेन वा न तु विधिवत्सत्कर्मानुष्ठानेनेत्यलं मर्मस्पृशा वाचा । तस्मादवश्यं धर्मोद्धरणोपाये यत्नः कार्य एव सर्वैः संघशः नैकैकशः ॥ यदीदानीमपि झटिति तान्देशानगत्वा पूर्वोक्तरीत्या नार्जयिष्यन्विद्यादिकं तदैतदपेक्षयोत्तरोत्तरं सर्वाः प्रजाः अतिदुःखपरम्परामवि-च्छिन्नतया पौत्रप्रपौत्रादिवंशपारम्पर्येणान्वभविष्यन्नेव, सत्कर्माणि वेदशास्त्राद्यध्ययनप्रक्रियादिकमुदच्छेत्स्यन्नेव, देवालयांश्चानाशयिष्यन्नेव' चोरैर्वञ्चकैरुत्कोचिभिर्हिंसकै र्बलिभिर्दुष्टैर्धूर्तैः सत्यपराङ्मुखैर्धनिभिःप्रबलैःस्त्रीभिर्बाधि-ताःसन्तो यशोधनभूगृहोपस्करमानज्ञानैः कदाचित्स्त्रीपुत्र मित्रबन्ध्वादिभिर्व्ययोजयिष्यन्नेव, तथोत्तमर्णमहापातकिसं योजितऋणशृङ्खलाशृङ्खलिता इतोपि सहस्रगुणां नीचां दुर्दशां क्रमेणाप्रपयिष्पन्नेवेत्यलं पल्लवितेन ।

न च तत्र गमनमन्तरा बहवोत्र स्वस्ववाणिज्या-दिभिरार्जितेन धनादिना सुखिनः सन्त्येवेति वाच्यम् ॥ तेषामपि सर्वदात्र बहूनां धनदारिद्र्याक्रान्तत्वेनोपायान्तरा ज्ञानेन स्वस्वसमयान्वेषणपरेभ्यस्तेभ्यः प्रमादालस्यले-

---

"अक्रुध्यन्तोनसूयन्तो निरहङ्कारमत्सराः । ऋजवः शमसम्पन्नाःशिष्टा-चारा भवन्ति ते" इति ( महाभारते अरण्यपर्वणि ) ( पराशरमाधवीये १ ध्याये २७ श्लो व्या० )च शिष्टशिष्टाचारयोर्लक्षणं स्पष्टम् ॥

खकद्वारपालपत्नीपुत्रचोरवञ्चकभृत्योत्कोच्यधिकारिरा-
जादिभ्योऽपि धनापहारभीतिबाहुल्यात् ॥ अत्र सर्वेषामस-
द्वृत्त्या धनाद्यर्जने श्रीमत्त्वाद्यभावो, वञ्चनाद्रोहदम्भादिक-
मन्तरा धनाद्यर्जकोपायज्ञानाभावो वा दृढं कारणम् ।

तस्मादिष्टप्राप्त्यनिष्टपरिहाराय सर्वैरपि वर्णैः संहत्यैकी
भूय दुराचारादिकं यथाशक्तिपरित्यजद्भिरिङ्गलेण्डमेरिका
जर्मन्यादिविद्याकलाशिल्पयन्त्ररसायनादिशास्त्रज्ञनिबि-
डिता देशास्तत्तत्साधनाय सामुद्रिकनौकायानादिना
झटिति गन्तव्याः । तज्ज्ञानादिकमर्जनीयम् । स्वदेशे तेषां
सर्वेषामपि व्यवहाराणां शास्त्रीयाणां लौकिकानां नीत्या-
दीनां च प्रसरणंकार्यम्। ततो यावच्छक्ति वेदशास्त्राध्ययना-
ध्यापनयजनयाजनादिस्वधर्मादिवृद्धिःकार्येत्यादिकंतथेतरा
धिकव्ययादिकं संकोच्य महाराजैस्सहस्रान्तरं प्रजाःप्रतिवर्षं
पृथक्पृथक्, धनिकैरन्यैर्वणिग्भिश्चसंहत्यधर्मार्थंधनमुद्धृत्यै-
की कृत्यशतंशतंप्रजाःप्रतिवर्षं पृथक्पृथक् तत्तद्देशीयैस्त-
त्तदभ्यासाय प्रेषणीयाः।ततस्स्वस्वधनानिक्रमेणोद्धर्तव्या-
नि ततो लाभश्चोपलब्धव्यइत्यादिकं स्वयमूह्यमिति दिक्।

एतेन नौकया प्रत्यन्तदेशगमने यानभाटकं महार्घं
तत्र स्थानभाटकं मूल्यं दत्त्वा वस्तुग्रहणं तत्र कपर्दिका
लाभस्याप्यशङ्कनीयत्वात्तदभावश्चेत्यर्थस्य निषिद्धप्र-

त्यन्तदेशगमनेन धर्महानिरधर्मोत्पत्तिश्चेति धर्मस्य-द्रव्यव्यये सत्यपि धर्माविरुद्धकामनाया असंभवो धर्म-विरुद्धकामनायाः संभव इति कामस्य रजोगुणप्रधाने सत्त्ववार्तैवागोचरेति का कथा मोक्षस्येति परास्तम् ॥ उत्तरत्रापि प्रसङ्गानुरोधेन तत्र तत्र फलानां निरूप-यिष्यमाणत्वाच्च ॥ इत्युपोद्घातः समाप्तः।

---

## अथ नौकायानविचार आरभ्यते।

### तत्रादौ नौयानसाधनं नाम प्रथमं खण्डमारभ्यते ॥

समुद्रे " समुद्रयात्रास्वीकारः " इति (कलिवर्ज्ये) द्विजानां यात्रायाः कलौ वर्ज्यत्वोक्तेस्तद्याने दोष इति तथा " समुद्रयानं मांसस्य भक्षणं शस्त्रजीविका। शीधुपानमुदीच्यानामविगीतानि धर्मतः " इति ( हेमाद्रौ प्रायश्चित्त-खण्डे मरीचिना ) उक्तेस्तद्यानं शिष्टाचारानुविद्धमिति तद्याने दोषो नेति विप्रतिपत्तौ तन्निर्णयाय विचार आर-भ्यते ॥ तथाहि ॥ ननु समुद्रयानं कार्यमेव नौकया ॥ निषेधाभावात् ॥ न च " समुद्रयात्रास्वीकारः " इत्याद्युक्त्वा " इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः " इति ( निर्णयसिन्धौ बृहन्नारदीये कलिवर्ज्ये ) " समुद्रयान-स्वीकारः" इत्यारभ्य " कलौ युगे त्विमान्धर्मान्वर्ज्यानाहु र्मनीषिणः " इति ( स्मृतिरत्नाकरे स्मृतिसारकृता )

चोक्तानां समुद्रयात्राप्रतियोगिकनिषेधानां भोजनादिवद्रागप्राप्तसमुद्राधिकरणकनौयानविषयकत्वायोगात् । शास्त्रीयनिषेधस्य शास्त्रीयविधिविषयकत्वौचित्यात् ॥ न च रागप्राप्तकलञ्जभक्षणादेः "न कलञ्जं भक्षयेत्" "नेक्षेतोद्यन्तमादित्यम्" इत्यादिशास्त्रीयनिषेधानां रागप्राप्तप्रतियोगिकत्वदर्शनाच्छास्त्रीयनिषेधो रागप्राप्तविषयेपि भवत्येवेति युज्यत एव द्विजकर्तृकसामुद्रिकनौयात्रानिषेधः कलाविति वाच्यम् । तत्र द्विजपदाभावेन द्विजकर्तृकेत्युक्तेरयुक्तत्वात् । न च "द्विजस्याब्धौ तु निर्याणम्" प०माधवी० १ । ३३ । इत्याद्युक्त्वा "एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्तितानि कर्माणि व्यवस्थापूर्वकं द्विजैः" इति (कलिवर्ज्ये) उक्तेः कलौ समुद्रयानं वर्ज्यमित्यर्थप्रतिपादकेत्र वचने कर्तृत्वेन द्विजानामेव निर्देशात् ॥ अत एव "विप्रादिष्वसवर्णजोद्वहमथो विप्रादिनौसंस्थितिम्" इति (कालनिर्णयसिद्धान्ते कलिवर्ज्यौ) वचने विप्रपदोपादानं संगच्छते इति वाच्यम्॥ अन्यैरेतद्यानस्य कलौ निषेधेपि "कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः" इति ( पराशरेण १ ध्या० २४ श्लो० ) वचनात्कलौ पराशरेण विहितानामनुष्ठेयता निषिद्धानां च त्याज्यता वाच्येति

१ "न तौ पशौ करोति" इतिवच्चेति बोध्यम् ।

द्विजानां समुद्रयाननिषेधस्य तेनानुक्तेः समुद्रयानं द्विजैर्न कार्यमिति निषेधस्यायोगात् ॥ न च पराशरेणान्यस्मृत्या दिभिर्विरुद्धोर्थो यत्र प्रतिपाद्यते तत्र पराशरोक्तमेव कलौ प्रमाणमिति तद्विहितमनुष्ठेयं तन्निषिद्धं त्याज्यमित्यङ्गी कारेणकलिवर्ज्योक्तस्यपराशरेणानिषिद्धत्वादप्रतिषिद्धम- नुमतमिति न्यायेन द्विजैःसमुद्रयानं न कार्यमिति सिद्धम् ॥ अत एव "शेषं तु मुनिभाषितम्" इति ( पराशरेण १ ध्याये २२ श्लो० ) स्मृत्यन्तरोक्तार्थसंग्रहायोक्तं संगच्छते इति वाच्यम् ॥ मातुलकन्यापरिणयस्य " मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च । समानप्रवरां चैव द्विजश्चा- न्द्रायणं चरेत्" इति ( शातातपेन ) निषिद्धत्वेपि शिष्टा- चारविषयत्वे यथायं निषेधो न प्रवर्तते तथास्य शास्त्रेण निषिद्धत्वेपि शिष्टाचारविषयत्वेनात्र निषेधाप्रवृत्तेः ॥ इदं चाग्रे स्फुटी भविष्यति ॥ न च यैर्वेदशास्त्रनिषिद्धमनुष्ठी- यते न ते शिष्टाः "अथ यदि ते कर्मविचिकित्सा वृत्तविचि- कित्सा वा स्यात् । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयु- क्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः" इति ( तैत्तिरीयोपनिषदि १ मवल्ल्यां ११ शानुवाके ३-४ ) उक्तेर्यथा " उदिते जुहोति " "अनुदिते जुहोति" इत्यत्र होमस्य तत्त्वं तथा समुद्रया-

नस्य न शिष्टाचारविषयत्वम् । ननु तर्हि के शिष्टा इति चेत् ॥ शृणु ॥ "धर्मेणाधिगतो यैस्तु धर्मः सपरिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः " इति ( दशनिर्णय्यां प्रवरनिर्णयप्रकरणे बोधायनेन ) उक्ता एव शिष्टाः । श्रुतिप्रत्यक्षो धर्माधिगमे हेतुर्येषां ते श्रुतिप्रत्यक्षहेतवः इति ( चन्द्रिकायां ) व्याख्यातं ( तत्रैव ) ॥ अन्यथा वृथापाकग्रामयाजकभृतकाध्यापकवेदविप्लावकादयोपि शिष्टाः स्युः । तेषामाचारोपि प्रमाणं स्यादिति महोपप्लव इति वाच्यम् ॥ " समुद्रयानं मांसस्य भक्षणं शस्त्रजीविका । शीधुपानमुदीच्यानामविगीतानि धर्मतः " इति ( स्मृतिमुक्ताफले आचारकाण्डे मातुलसुतापरिणयपशुहिंसाविचारप्रकरणे स्मृतिरत्नाकरे च व्यासेन ) उक्तेरशास्त्रसम्मतत्वेन समुद्रयानस्य शिष्टाचारविषयत्व-

---

१ ) ( ते ) तव श्रौते स्मार्ते वा कर्मणि वृत्ते वाचारलक्षणे ( विचिकित्सा ) संशयः ( स्यात् ) भवेत् ये ( तत्र देशे काले वा ब्राह्मणास्तत्र कर्मादौ युक्ता इति व्यवहितेन संम्बन्धः कर्तव्यः ( सम्मर्शिनः ) विचारक्षमाः ( युक्ताः ) अभियुक्ताः कर्माणि वृत्ते वा ( आयुक्ताः ) अपरप्रयुक्ताः ( अलूक्षाः ) अरूक्षाः अक्रूरमतयः ( धर्मकामाः ) अदृष्टार्थिनः ) अकामहता इत्येतत् ते यथा येन प्रकारेण ब्राह्मणाः ( तत्र ) तस्मिन्कर्मणि वृत्ते वा वर्तेरन् तथा त्वमपि वर्तेथाः " इति ( तत्र श्रीशङ्करभगवत्पादानां भाष्यम् ) पूर्वपृष्ठे ॥

सिद्धेः। अत एव "पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः यानि दक्षिणतस्तान्यनुव्याख्यास्यामः। यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं मातुलसुतागमनं पितृष्वसृदुहितृगमनमिति । अथोत्तरतः ऊर्णाविक्रयः शीधुपानमुभयतो दद्भिर्व्यवहारः आयुधीयकं समुद्रयानमिति तदितर इतरस्मिन्कुर्वन्दुष्यतीति " इति ( स्मृतिरत्नाकरे कलिविशेषधर्मे बोधायनेन ) उक्तं संगच्छते। एवं मातुलकन्यापरिणये दृष्टान्तेपि " अब्रह्मचारिदाराद्यैः सार्धं भोजनकर्म च । मातुलादिसुतायाश्च विवाहः शिष्टसम्मतः । इत्येते दाक्षिणात्यानामविगीतानि धर्मतः" इति ( तत्रैव व्यासेन ) उक्तेः शास्त्रसम्मतिरस्तीति न दृष्टान्तदार्ष्टान्तभावानुपपत्तिः॥ न चैवं दाक्षिणात्यानां समुद्रयानं दुरुपपादम् । " समुद्रयानं

---

( १ ) "दक्षिणत इत्यस्य नमर्दाया इति शेषः। उत्तरेण कन्यातीर्थमिति च। उत्तरत इत्यस्य विन्ध्यादिति शेषः। दक्षिणेन हिमवन्तमिति च। नर्मदामारभ्य कन्यातीर्थपर्यन्तं दक्षिणदिशि जातानां विषये तथा विन्ध्यमारभ्य हिमाद्रिपर्यन्तमुत्तरादिशि जातानां विषये चायं परस्परविसंवादो भवतीत्यन्वयः। उभयतो दन्ता येषां ते अश्वादयस्तैर्व्यवहारः क्रयविक्रयादिरित्यर्थः। ( आयुधीयकम् ) आयुधेन जीवनम् ( ऊर्णा ) मेषादिलोम । तत्कृतकम्बलादेर्विक्रय इति स्पष्टोर्थः" इति ( स्मृतिमुक्ताफलेऽन्यत्र ) सूत्रार्थो वर्णितः।

मांसस्य" इति पूर्वोक्तवचने समुद्रयानस्य "उदीच्याना मविगीतानि धर्मतः" इत्युक्तयोदीच्यशिष्टानामाचारविषयत्वेऽपि दाक्षिणात्यशिष्टानामाचारविषयत्वाभावात् ॥ अन्यथा पूर्वोक्तकलिवर्ज्यस्य समुद्रयानस्य दत्तजलाञ्जलित्वापत्तेरिति वाच्यम् ॥ "समुद्रयानं ब्रह्मस्वन्यासापहरणं भूम्यनृतवदनं सर्वापण्यैर्व्यवहरणं यश्च शूद्रायामभिजायते तदपत्यं च भवति । तेषां च निर्देशः । चतुर्थकालं मितभोजिनः स्युरपोऽभ्युपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम्" इति (पराशरमाधवीये १२ शेऽध्याये ॥७९॥ श्लोव्या.शूद्रसेवाप्रायश्चित्ते बोधायनेन) उक्तस्य समुद्रयानप्रायश्चित्तविधानस्य प्रकारस्य च वैयर्थ्यापत्तेरितिचेत् ॥ न ॥ उत्तरदिक्स्थसमुद्रयातुः समुद्रयाने कलिवर्ज्योक्तं तं निषेधमुल्लङ्घ्य तत्कर्तुर्विषये प्रायश्चित्ताभाव

---

(१) तदपत्यमिति । (तेन) शूद्रवर्णेन संगत्यास्या यदपत्यं जायते इत्यर्थः । प्रायश्चित्तार्थं (तेषां) पूर्वोक्तानां निर्देशः । कृत इति शेषः । प्रायश्चित्तयाह । चतुर्थेति । चतुर्थः कालो यस्मिन्तथा । यथाद्य दिवा भुङ्क्ते श्वो रात्रौ तथोक्ताः । (मितभोजिनः) अमृष्टाशिनः । अपोभ्युपेयुः) भूमिगतास्वप्सुस्नानं कुर्युः । (सवनानुकल्पं) त्रिषवणम् । (स्थानासनाभ्यां) रात्रावह्नि च स्थानासनाभ्यां तिष्ठेयुः । न शयीरन्नित्यर्थः ।" इति स्मृतिमुक्ताफलेतिपातकप्रायश्चित्तेषु पतनीयप्रायश्चित्ते) अर्थो वर्णितः ।

स्य प्रवृत्त्या परिशेषाद्दाक्षिणात्यस्य समुद्रयातुः समुद्र याने कलिवर्ज्योक्तनिषेधस्य प्राप्तौ तं निषेधमतिक्रम्य तद्यानकर्तुः विषय एव प्रायश्चित्तानुष्ठापकत्वेन प्रायश्चित्त-विधेः कलौ समुद्रयानं वर्ज्यमिति निषेधं ज्ञात्वां समुद्र-यानत्यक्तरि निषेधस्य च सार्थक्यमित्यदोषात् ।

एतेन कलिवर्ज्यतयोक्तनिषेधमुल्लङ्घ्य समुद्रयातु-र्द्विजस्य प्रायश्चित्तं तदितरस्मिन्निषेधरूपकलिवर्ज्योक्तिं ज्ञात्वा समुद्रयानत्यक्तरि शूद्रे ततो निकृष्टे वा निषेधश्च-चरितार्थ इति परास्तम् ॥ "द्विजस्याब्धौ तु निर्याणम्" इति ( कालनिर्णयसिद्धान्ते कलिवर्ज्यप्रकरणे ) द्विजग्र-हणेन द्विजविषय एव कलिवर्ज्यतया निषेधप्रवृत्तेः ॥ नच "विप्रादिनौसंस्थितिम्" इति प्रागुक्तवचने आदिना क्षत्रियवैश्यशूद्रा गृह्यन्ते । सङ्कोचे मानाभावात् । असति बाधके प्रमाणानां सामान्ये पक्षपात इति न्यायाच्चेति वाच्यम् ॥ श्रुतिस्मृतीनामर्थस्यैवानुवादकत्वात्कालनिर्ण-यसिद्धान्तग्रन्थस्थादिपदार्थस्य "द्विजस्याब्धौतु निर्या-णम्" इति स्मृत्यनुसारेणैव कल्पनीयत्वात् ॥ प्राय-श्चित्तस्य चातुर्वर्ण्यविषयकत्वापत्तेश्च ॥

न च निषेधमुपजीव्यैव प्रायश्चित्तविधिप्रवृत्तेः स्वो-पजीवकत्वेन सार्थक्यसंभवे प्रकारान्तरेण निषेधस्य सार्थ-

क्यवर्णनं न युक्तमिति वाच्यम् ॥ निषेधस्य सर्वत्र यत्किञ्चिन्निवर्तकत्वं तथा तन्निषेधमुल्लङ्घ्य प्रवृत्ते प्राप्त प्रायश्चित्तोपजीवकत्वं लौकिकयामिकवत् (पोलिस) इत्यदोषात् ॥ नन्वेवं प्रायश्चित्तोक्त्यैवेदं न कार्यमिति तत्कर्मपरित्यागस्य प्रायश्चित्तं ज्ञात्वा धौत्यैन तदज्ञात्वा वैच्छिकतया तत्कर्मानुष्ठातुः पापभीत्या प्रायश्चित्तस्य कर्तव्यता चेत्येवं सर्वेष्टसिद्धौ कलिवर्ज्ये पठनमस्य व्यर्थं स्यात् ॥ न चैवं विनिगमनाविरहात्कलिवर्ज्यपाठमभ्युपेत्य प्रायश्चित्तविधिवैयर्थ्यमेव कल्प्यतामिति वाच्यम् ॥ उपपातकसामान्ये विहितं प्रायश्चित्तं विना समुद्रयाने प्रतिपदोक्तप्रायाश्चित्ताविधानाभावेनैतदारम्भस्यावश्यकत्वादिति चेत् ॥ न ॥ कृतप्रायश्चित्तस्यापि संव्यवहार्यत्वाभावरूपवर्ज्यताप्रतिपादनाय कलिवर्ज्ये पाठस्याप्यावश्यकत्वात् ॥ न च कृतप्रायश्चित्तस्यापि यदि संव्यवहारो नाम परिग्रहो न स्यात्तर्हि भक्षितेपि लशुने न शान्तो व्याधिरिति न्यायेन प्रायश्चित्तानुष्ठानस्याप्रयोजकत्वापत्तिरिति वाच्यम् ॥ स्वीयसन्ध्यावन्दनादिनित्यकर्मोपयोगिशुद्धिसम्पादकत्वेन प्रायश्चित्तस्य सार्थक्यात् ॥ न च घटायोन्मीलितं चक्षुः पटं न हि न पश्यतीति न्यायेन स्वेनानुष्ठितं प्रायश्चित्तं स्वीयावश्य-

कनित्यकर्मार्थं संव्यवहारार्थं च शुद्धिं सम्पादयत्येवेति वाच्यम् ॥ "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इत्याद्युक्त्वा "एतानिलोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥ निवर्तितानि कर्माणि व्यवस्थापूर्वकं द्विजैः" इति ( निर्णयसिन्धावादित्यपुराणे कलिवर्ज्ये ) कृतप्रायश्चित्तस्यापि समुद्रयातुः ( संग्रहः ) संव्यवहार्यता नेत्यर्थस्य प्रतिपादनायैव 'संग्रहः' इति वचनस्य प्रवृत्तत्वात् ॥ एतेन न च सर्वाण्यपि प्रायश्चित्तानि स्वीयनित्यकर्मसम्पादकशुद्धिप्रयोजकान्येव स्युर्न तु संव्यवहार्यताप्रयोजकान्यपीति वाच्यम् ॥ दृष्टान्ताभावात् ॥ प्रायश्चित्तवाक्यापेक्षया तत्संग्रहप्रयोजकवाक्यस्य भिन्नतया कुत्रापि शास्त्रेष्वदर्शनादिति परास्तम् ॥ "त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च" इत्युपक्रम्य "तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्ति" इति ( आपस्तम्बकात्यायनाभ्यां स्वस्वधर्मसूत्रे ) तथा "अनृतवाक्तस्करो राजभृत्यः" इत्यारभ्य कांश्चिदुक्त्वा "तानुद्धरेत्समेस्य (त्य)न्यायतो ब्राह्मणव्यवस्थया सर्वद्रव्यत्यागे चतुर्थकालाहाराः संवत्सरं त्रिषवणमुपस्पृशेयुः । तस्यान्ते देवर्षिपितृतर्पणं गवाह्निकं चेत्येवं व्यवहार्याः" इति ( मिताक्षरायां ३ ध्या २८९ श्लोव्या०

प्रचेतसा ) नरकोत्पादकपापनिवर्तकप्रायश्चित्तमुक्त्वाव्यवहार्यत्वसंपादकप्रायश्चित्तस्य पृथगुक्त्या दृष्टान्तस्य प्रसिद्धत्वात् । एवं च नरकोत्पादकपापनिवारकत्वव्यवहारसाधकत्वरूपशक्तिद्वयमध्ये केषाञ्चित्प्रायश्चित्तानामुभयसम्पादकत्वं केषाञ्चित्प्रायश्चित्तानामाद्यसंपादकत्वमेव केषाञ्चिदन्त्यसंपादकत्वमेवेत्यनुमानेन पापनिष्ठस्यनरकप्रापिका व्यवहारनिरोधिका चेति शक्तिद्वयस्य मध्ये उक्तप्रायश्चित्तेन नरकप्रापकशक्तिनाशेपि व्यवहारनिरोधिका शक्तिः क्वचिदेव नश्यति न सर्वत्रेति ज्ञायते॥ ततश्चनौसमुद्रयानजन्यपापनिष्ठशक्तिद्वयमध्ये प्रायश्चित्तेनाद्यशक्तिनाशेपि द्वितीयशक्तिर्न नश्यति ॥ "शोधितस्यापि संग्रहः" इति वचनेन व्यवहारजनकशक्तेर्बाधेन-तदुत्पत्त्यभाव इत्यर्थस्य प्रतिपादनात् । अत एव "विहितस्यानुष्ठानान्निन्दितस्य च सेवनात् । अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ २१९ ॥ तस्मात्तेनेह कर्त्तव्यं प्रायश्चितं विशुद्धये । एवमस्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २२० ॥" इति ( याज्ञवल्क्येन ३ ध्याये ) वचने प्राप्तव्यनरकसम्बन्धसंपादकपापनाशेन "अन्तरात्मा" इत्येतदपेक्षया लोकव्यवहारप्रतिबन्धकपापनाशेन संव्यवहारसंपत्त्या "लोकश्च प्रसीदति" इति पृथगुक्तं संगच्छते इति केचित् ॥

॥ तन्न ॥ कलिवर्ज्यवचनेन समुद्रेनावा सकृद्यानं कुर्वतो विषये प्रायश्चित्तेन शोधितस्यापि संग्रहः संव्यवहारो यतो-निषिध्यते " द्विजस्याब्धौ तु नौयातुः" इति पूर्वोक्तवचने यातृशब्दे " तच्छीलतद्धर्मतत्साधुकारिषु " इत्य-नुवर्तमाने "तृन्" इति ( पाणिनितन्त्रे ३ । २ । १२५ ।) सूत्रेण तृन् । तच्छीलो नाम तच्छीलं यस्य सः। एतदेव फलं नान्यदित्येतत्फलभिन्नफलान्तरानपेक्षया तत्र तत्र याप्रवृत्तिस्तदाश्रयः।यच्च शीलं यस्य स तत्रासकृत्प्रवर्तते इति सर्वानुभवसिद्धोयं तच्छीलपदार्थः। अत एव "अगा-रदाही गरदः कुण्डाशी सोमविक्रयी। समुद्रयायी वान्ताशी ( बन्दी च ) तैलिकः कूटकारकः ॥ ५८ ॥" इत्याद्युक्त्वा "एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान्।द्विजातिप्रव-रो विद्वानुभयत्र विवर्जयेत्॥६७॥"इति ( मनुना ३ ध्या ) श्राद्धे दैवे पित्र्ये चोक्तानां ताच्छीलिकणिन्यन्तप्रति-पाद्यानां निमिन्त्रणनिषेधप्रतिपादके 'विगर्हिताचारानपा-ङ्क्तेयान्'इति विषेशणद्वयं सार्थकम्॥अन्यथा'समुद्रयाता' इति सिद्धे"विगर्हिताचारानपाङ्क्तेयान्"इति विशेषणद्वयं व्यर्थं स्यात्॥ममतुयतःसमुद्रयानशीलोऽपाङ्क्तेयो विगर्हि ताचारश्चातस्तमुभयत्र विवर्जयेदिति हेतुपक्षसाध्यप्रदर्श नायैतदुपादानंसार्थकम्॥तथा च तेषां कृतेपि प्रायश्चित्तस

हस्तेसंग्रहो न भवति "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इति पूर्वोक्तसंग्रहाभावे केन हेतुनाकस्य क्वेति च विशेषाकाङ्क्षायांसमुद्रयानशीलस्य द्विजस्यापाङ्क्तेयत्वे नविगर्हिताचारत्वेन च हेतुना श्राद्धे देवस्थाने पितृस्थाने चोपवेशनायैव संग्रहः कलौ वर्ज्य इति कलिवर्ज्यै प्रतिपाद्यते न सर्वत्र संग्रहाभाव इत्यदोषः ॥ अत्र मनुवचने "समुद्रयायी" इत्यादौ "बहुलमाभीक्ष्ण्ये" इति ( पाणिनितन्त्रे ३।२।८१ ) । "णिनिः" । "सुप्यजातौ णिनिस्ताच्छील्ये" इति ( तत्रैव पाणिनिना ३।२।७८। ) णिनिस्तु न ॥ "अजातौ" इति निषेधात् । दृष्टान्ताच्च ॥ यथा "गान्धर्वो लोहकारश्च सौनिकस्तन्तुवायकः । चक्रोपजीवी रजकः कितवस्तरलस्तथा ॥ यजमानोपजीवी च शूद्राध्यापकयाजकौ । कुलटाश्चित्रकर्मा च वार्धुषिश्चर्मविक्रयी । समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति । स वै वार्धुषिको नाम यश्च वृद्धचोपयोजयेत् । वृथारामाश्रमाणां च भेदकः पुण्यविक्रयी । विक्रयी ब्राह्मणो यश्च योनिसाङ्करिकश्च यः।रङ्गोपजीवी कूटाशःकुहको गुरुगुप्तिकः ॥ भिषक् च रजकश्चैव रूपाजीवी च सूचकः । सौनिको वर्णिकश्चैव निषादेन समाःस्मृताः।कर्मणा तेषु यो मोहाद्ब्राह्मणो वर्तते सदा । प्रायाश्चित्ते तु चरिते परिहार्यो भवेद्बहिः।

एते ब्राह्मणचण्डालाः सर्वे ब्रह्महणः किल ॥ तस्माद्दैवे च पित्र्ये च वर्जितास्तत्त्वदर्शिभिः" इति ( पराशरमाधवीये ११ध्याये८श्लो०व्या०बृहस्पतेः ) उक्तिषु प्रायश्चित्तेनुष्ठिते पि "बहिःपरिहार्यः" संव्यवहार्योन भवतीत्युक्त्वाकुत्रेत्याकाङ्क्षानिवृत्तये "दैवे पित्र्ये च वर्जयेत्" इति कीदृशस्येत्याकाङ्क्षायां "कर्मणातेषुयो मोहाद्ब्राह्मणोवर्तते सदा" इति "सदा यो वर्तत" इति तत्कर्मण्यभ्यासवत इत्यर्थो निरूपितइति॥ तथा च तदभ्यासोपि श्राद्धमात्रे एव वर्ज्यताप्रतिपादको न सर्वत्रेत्यनेनोच्यत इत्येतद्दृष्टान्तबलात्समुद्रयात्राया अभ्यासेपि श्राद्धमात्रे संग्रहाभावो नान्यत्रेति कल्पना युक्ता॥ नच "उपक्रमोपसंहारावभ्यासो योग्यता फलम्। अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति ( १।१।१ ब्रह्मसूत्रभाष्यादौ ) उक्ततात्पर्यनिर्णायकेषु दृष्टान्तो न प्रविष्ट इति वाच्यम् ॥ उपपत्तिपदेन दृष्टान्तस्यापि गृहीतत्वादित्यन्यत् ॥ ननु "मासं कारागृहे वासोनौभिर्यात्रा दिनत्रयम्। म्लेच्छावासे तथा पक्षं यो वसेत्स तु पातकी" इति (हेमाद्रौ प्रायश्चित्तखण्डे मरीचिना।)उक्तम्।तत्रपूर्वार्धेन्वयार्थं य इत्येतद्यस्येति षष्ठ्यन्तत्वेन विपरिणम्यते। मासमित्यादावत्यन्तसंयोगे द्वितीया मासमधीते इतिवत्। तेन दिनत्रयमवतीर्य गमनेपि दिनत्रयं यात्रा भवत्येव, कार्या-

र्थमन्यत्र दिनेषु गमनेपि मासं कारागृहे म्लेच्छावासे पक्षं वासो यथा ॥ अत्र "मासं कारागृहे" इत्यादौ तत्तदधिकरणकेवासयात्रे पापोत्पादिके एव विवक्षिते।न तु सामान्ये। अन्यथा कारागृहे कार्यकर्तॄणामधिकारिणां म्लेच्छराज्ञो म्लेच्छाधिकारिणो म्लेच्छधनिकस्यावासे म्लेच्छस्वामिके व्यवहारस्थाने (कोर्ट) राष्ट्रपालस्थाने(मुन्सिपालिटी) दण्डस्थाने (मॅजिस्ट्रेट) यामिकस्थाने(पोलिस कचेरी)माण्डलिकस्थाने (गवर्नरऑफिस ) इत्यादिष्वधिकृतानां वा कार्यकर्तॄणामथ वाम्लेच्छो यत्रावसति तत्रेत्यर्थं प्रासादादौ दौवारिकाणांस्थानेऽन्यत्र मार्गेपि याञ्चार्थं म्लेच्छस्य नियमेनानियमेन वोपवेशनस्थानेपि महामहानौकानिर्माणं यत्र क्रियते तत्र तथैव महानौकासु देशान्तरं प्रति प्रेषणाय प्रत्यहं परिपूर्यमाणसामग्रीसंघटनसमीकरणादिकार्ये प्रत्यहं देशान्तरेभ्य आगतासु कनकवस्त्रादिपरिपूर्णासु नौकासु स्थितानां धनानां वस्तूनां च परिशोधनादिकार्येधिकृतानामल्पनौकामार्गेण महानौकास्थानस्य गन्तव्यतया तथा गन्तॄणामपि वचनोक्तकालावच्छेदेन गमने यात्रावासयोस्संभवेन प्रायश्चित्तापत्तेः॥अत्र नौपदेन समुद्राधिकरणकनौरेव विवक्षणीया । तेन गङ्गाकावेरीकपिलायमुनानद्यादिषू डुपोत्सवादिकालविशेषेष्वपि दिनत्रयं नौयाने उडुपयानेपि

न दोषः। नचोडुपनावोरभेदः॥"स्त्रियांनौस्तरणिस्तरिः। उडुपं तु प्लवः कोलः इति (समुद्रवर्गे नामलिङ्गानुशासने) भेदेन निर्देशात्। "त्वन्ताथादि न पूर्वभाक्" इति (स्वर्गवर्गे तत्रैव) नियमोक्तेः।म्लेच्छपदेन"गोमांसभक्षको यस्तु लोकबाह्यं च भाषते। सर्वाचारविहीनोसौ म्लेच्छ इत्यभिधीयते" इति ( नामलिङ्गानुशासने शूद्रवर्गे २० श्लो०व्याख्यायांसुधायां)"ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः। अस्यामनेन चौर्येण म्लेच्छो विप्रात्प्रजायते" इति ( सूतसंहितायां जातिविवेके ) "भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः" इति ( लिङ्गानुशासने शूद्रवर्गे२०श्लो ) च म्लेच्छतज्जातीयभेदानामुक्तेस्ते सर्वेपि ग्राह्याः। अन्येप्येवं म्लेच्छपदार्थभेदाश्चण्डालभेदाः अत्र ६ प्रकरणान्तरेउक्तास्ततोवसेयाः॥

न चात्र वचने "मासं" "दिनत्रयं" "पक्षम्"इत्यविच्छिन्नतया वस्तव्यकालनिर्देशेनाधिकारिणां भानुवासरादिकेषु क्वचिन्नियतदिवसेषु तत्र प्रवेश एव नेति तथा प्रत्यहमपि कार्यदिवसेषु कार्यसमय एव तत्र प्रवेशो न सर्वदेति कथमधिकार्यादीनां प्रायश्चित्तापत्तिः। पापसंपादकवास एवात्र वासपदेन ग्राह्यइत्युक्तेरिति वाच्यम्॥ यथा "मासं" "दिनत्रयं" "पक्षम्" इत्येतेषुतथामास-

मधीते इत्यादावपि निषिद्धानध्यायभोजननिद्रारोगाक्रमणाशौचादिकालभिन्नकाल एवाधीत इत्यत्यन्तसंयोगाभावेन द्वितीयानापत्तेः ॥ न च "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योध्वा च कर्मसंज्ञक इति वाच्यम्" इति वार्तिकेनात्यन्तसंयोगाभावेपि "मासम्" इत्यादौ द्वितीयाभ्युपगमेनादोषः। "मासमधीते" इत्यादौ तु "कालाध्वनोरत्यन्तसंयोगे द्वितीया" इति द्वितीया। अत्यन्तसंयोगस्तु तत्र बुद्धिस्थदेशकालाभ्यां गुणक्रियाभावैरत्यन्तसंयोगे द्वितीयेत्यर्थाबुद्धिस्थकालेनाध्ययनक्रियासम्बन्धरूपइति वाच्यम् ॥ "मासम्" इत्यादावपि "कालाध्वनोः—" इत्यनेनैवोक्तरीत्या त्यन्तसंयोगो वासरूपक्रिययास्तीति द्वितीयासिद्धेर्निष्प्रत्यूहत्वात्। ततश्च पापप्रयोजकवासस्यैव निषेध प्रयोजकत्वमुक्तं युक्तमेव ॥

न च यदा कदा वा पापप्रयोजक एव नौवासो येनाकारि यथा अद्य ततः परश्वस्ततः पञ्चमे दिने च नौवासादिकं कृतमिति दिनत्रये नौवासः अथ वा वर्षाभ्यन्तरेन्यदा वा यदाकदाचिदेकैकस्मिन्दिने नौवास इत्येवं क्रमेण दिनत्रये नौवासः कृतस्तस्यापि पातकित्वापत्तिरिति वाच्यम् ॥ तस्य देशस्यात्यान्तिकसम्बन्धप्रतियोगित्वेन बुद्धिस्थत्वा

भावेनादोषात् ॥ न च तर्हि प्रकृते तन्निश्चये मानाभाव इति वाच्यम् ॥ धर्मशास्त्रोपदेष्टृपरम्पराऽऽरूढेरेव दिनत्रयमविच्छिन्ननौकावासेतत्र मानत्वादिति सन्तोष्टव्यमायुष्मतेति चेत् ॥

॥ न ॥ तथा सति कारागृहाधिकरणकान्यूनानतिरिक्तमासकालिकवासस्यैव पातकप्रयोजकत्वापत्तेः ॥ न च "बलाद्वन्दीकृतोयस्तु म्लेच्छचण्डालदस्युभिः । कारागृहे मासमात्रमुषित्वा कायमाचरेत्।प्राजापत्यं च चान्द्रं च चरेत्संवत्सरोषितः" इति(स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे गौतमेन ) उक्तेः "कारागृहाद्विनिर्गत्य प्रायश्चित्तं विशोधितम् । कृत्वा विप्रः पुनः कर्म कृत्वा शुद्धिमवाप्नुयात् । बलाद्वन्दीकृता नारी तत्रैव निवसेद्यदि । पक्षमासमृतुं चाब्दमुत्सृष्टा चेत्तदा पतिः । " इत्याद्युक्त्वा "अर्धमुक्तं तु तत्स्त्रीणाम् ।" इति( तत्रैवयमेन)उक्तेस्तदाधिक्येपि प्रायश्चित्तं सिध्यतीतिवाच्यम् ॥ तत्तदुक्तविषयकमासदिनत्रयपक्षाणां परस्परं तौल्यात्संवत्सरोक्तं प्रायश्चित्तं द्वादशगुणिते दिनत्रये पक्षे च समानमेवेति यावद्दिनत्रयाद्यानुगुण्येन प्रायश्चित्तस्य न्यायसाम्यात्कल्पनया दोषाभावात् ॥

किंच "पतनीयानां प्रायश्चित्तमाह बोधायनः "समुद्रयानं ब्रह्मस्वन्यासापहरणं भूम्यनृतवदनं सर्वापण्यैर्व्यवहरणं

शूद्राभिगमनं यश्च शूद्रायामभिप्रजायते तदपत्यं च भवति। तेषां च निर्देशः—चतुर्थकालं मितभोजिनःस्युरपोऽभ्युपेयुः सवनानुकल्पम् । स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षै स्तदपहन्ति पापम्" इति । "चतुर्थः कालो येषां—यथाद्य दिवा भुङ्क्ते श्वो रात्रौ ते तथोक्ताः तथा(मितभोजिनः )अमृष्टा शिनः अपोऽभ्युपेयुःभूमिगतास्वप्सु स्नानं कुर्युः । (सवनानु- कल्पं)त्रिषवणं स्थानासनाभ्यां विहरन्तास्तिष्ठेयुःअह्नि रात्रौ चासीरन्।एवं(विहरन्तः)कालं क्षिपन्तएते त्रिभिर्वर्षैस्तत्पा- पमपनुदन्तीत्यर्थः"इति ( स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे पतानीयप्रायश्चित्ते)उक्तम्।तच्च समुद्रयानं चिरकालिकं सर्वे थाचारभ्रंशप्रयोजकमित्याशयेन "समुद्रयानम् " इत्यादि "तदपहन्तिपापमिति"इत्यन्तमुक्त्वा "तद्बहुकालाभ्यासवि- षयम् " इति ( पराशरमाधवीये १२ ध्याये शूद्रसे- वाप्रायश्चित्ते माधवाचार्यैः ) उक्तम् ॥ तथोक्त्यनन्तर मुभाभ्यामप्याभ्यां समुद्रयानाविषयककलिवर्ज्यघटका संग्रहकथालेशस्याप्यनुपन्यासात्— " शोधितस्यापि संग्रहः" इत्यंशः प्रक्षिप्त इत्यनुमीयते । न च कलिव- र्ज्यवचनेन बोधायनोक्तप्रायश्चित्तवचनस्यैव विनिगमना विरहात्प्रक्षिप्तत्वमनुमीयतामिति वाच्यम् ॥ वक्ष्यमाणरी- त्याबहुभिस्साद्भिर्महाद्भिः श्रोत्रियैरास्तिकशिरोमणिभिस्त्रै

वर्णिकैः कलावन्यदा च समुद्रे नावा सञ्चरितत्वस्य ब-हुषुग्रन्थेषु वर्णनात्तेषु केषामपि प्रायश्चित्तस्यासंग्रहस्यवा ब्धिनौयानप्रयोज्यस्य ततोन्यत्र वानुल्लेखाच्चकलिवर्ज्यस्यै व तत्त्ववर्णनं युक्तमित्यदोषात्।किंच यथा महर्षिणापस्त-म्बेन व्रात्यस्तोमे यथा वा—लोहकारसौनिकादिकर्मजीवि-विषयकप्रायश्चित्तेमहर्षिणा बृहस्पतिनेवाऽसंग्रहःप्रायश्चित्ता त्पृथक्कण्ठत उक्तस्तथा सर्वज्ञेन महर्षिणा बोधायनेन प्राय-श्चित्तात्पृथगसंग्रह इत्यर्थानुल्लेखान्न्यूनतास्यादिति त-द्व्यावृत्तये संग्रहाभावप्रतिपादनस्याप्रामाणिकत्वमवश्य-मनुमेयमित्येवं कल्पनाया युक्तत्वाच्च ॥ न च ( निर्णय-सिन्धौ३ यपरिच्छेदे पूर्वार्धे कलिवर्ज्यप्रकरणे कमलाकरेण पराशरमाधवीये १ ध्याये ३३ श्लो०माधवाचार्येण च ॥ कलिवर्ज्ये ) "असंग्रहः" इत्यंशस्योक्तेर्नायं प्रक्षिप्तांशः स्यादिति वाच्यम् ॥ बहुषु लिखितेषु मुद्रितेषु च पुस्तकेषु निर्णयसिन्ध्वादिषु कलिवर्ज्ये "शोधितस्याप्य-संग्रहः" इत्यपि पाठस्य दर्शनात् ॥ नच तत्र पाठे लोक-व्यवहारः प्रमाणमस्ति । अत्रतु नेति वाच्यम् ॥ रामेश्वर चन्नपत्तन ( मद्रास ) नागपत्तना ( नागूर )ऽनन्तशयना-न्तर्गतकोच्चि,कोलम्ब,नवपाषाण,दर्भशयन,पुदचेरि,कोडि-यालं, गोकर्णादिदक्षिणसमुद्रतीरवासिभिस्तथा मोहमयी,

( मुम्बई ) कराची, कोङ्कण, जगन्नाथ, कालीघट्ट (कलकत्ता) कच्छमाण्डवी, मछ्छरीबन्दर ( मुसलिपटाम् ) ब्रह्मदेशी रंगून, भावनगर, द्वारकाद्युत्तरदेशीयसमुद्रतीरवासिभिस्तत्सहचारितदाश्रिततत्सेवकतत्परिचारकतत्सम्बन्धितज्जामातृतत्स्यालकदुहितृदौहित्रश्वशुरज्ञातिमातुलादि भिस्तत्तदनुयायिभिश्च शिष्टैरशिष्टैस्त्रैवर्णिकैर्दक्षिणोत्तरदेशस्थैर्निरन्तरं नौकासु समुद्रे स्वस्वलौकिकालौकिकनित्यनैमित्तिककाम्यकार्यार्थं गमनागमनयोश्चिरात्परम्परागतत्वेन प्रमाणस्य मन्मते जागरूकत्वात् ॥

एवंचोक्तस्थाननिवासिभिस्सहितस्ततस्तीर्थयात्रिकादीन नयनानयनाय देशान्तरागतवस्तुसंग्रहाय तांस्तान्देशान्प्रति नानावस्तुप्रेषणाय वा "अकाले चेत्कृतं कर्म कालं प्राप्य पुनः क्रियात्। कालातीतं तु यत्कुर्यादकृतं तद्विनिर्दिशेत्" इति ( स्मृतिरत्नाकरे स्मृत्यन्तरे ) उक्तं न्यायं दूरीकृत्यबाष्पशकटसञ्चारकालिकसन्ध्यास्नानपञ्चमहायज्ञानुष्ठानसंक्षेपकालदेशव्यत्ययतल्लोपानुष्ठानपाटिष्ठसमुद्रतीरान्यदेशस्थनगरक्षेत्रादिनिवासि–वैदिकशास्त्रिदीक्षितज्यौतिषिकवैद्यमन्त्रज्ञपुरोहितमठाधिकारिधर्माधिकारिश्रोत्रियसाधुसभ्य, तत्तद्राजकीय-मिथ्यावादिवञ्चकद्रोहिलोभिक्रोधिविद्वेषिप्राड्विवाकनगरग्रामखेटखर्वाटदेश-

देवादायब्रह्मादायान्नसत्रदेवालयपाठशस्त्रगजाश्वगोमाहिष-रथशालासैन्यराजद्वारवनरथ्याप्रासादगोपुराट्टालकन्यास-खनिदुर्गरक्षानदीनदतटाकसरोजलनालिका कल्मषवस्तुप-रीक्षाक्रयविक्रयधननिर्माणग्रन्थरचनानगरग्रामप्रासादवि-मानशिल्पतद्वास्तुशिल्पाधिकाराधिकृतसप्तविधमदमत्तध-निकधार्मिकादिभिर्भारतीयैरङ्गवङ्गकलिङ्गान्ध्रकीकटद-क्षिणापथावन्त्यसिन्धुसौवीरसौराष्ट्रादिनिषिद्धदेशगमनत-द्वासादिकंस्वतःकुर्वद्भिरावश्यकेषु संव्यवहारं साक्षात्पर-म्परया च निरर्गलं कुर्वद्भिः । सर्वैस्त्रैवर्णिकैरङ्गीकृत एव सामुद्रिकनौकायात्राप्रचारस्स्वयं कृततत्प्रचारवदेति वा विदाङ्कुर्वन्तु शान्तचित्ता महान्तो महाशया दोषज्ञाः ॥

किं च "द्विजस्याब्धौ तु नौयातुः" इति ताच्छील्ये तृनातत्र नाविक स्यैवासंग्रहः शोधितस्यापि प्रतिपाद्यते इति समुद्रयातृसामान्ये तदयोगात् ॥ न च नौयातुरित्य-स्य तृनन्तत्वे मानाभावः ॥ पूर्वपूर्वोत्तरोरसाहचर्यात्तृजन्त-मेव तदिति वाच्यम् ॥ कालदेशपरिमाणमनुक्त्वा "असंग्रहः" इत्युक्तेस्सर्वत्र सर्वकालेऽल्पे महतिवासमुद्रतीरेन्यत्र वा देशे वसतामपि समुद्रयानेऽसंग्रहापत्त्यैतद्विषयेतदर्थकल्पनाया अयुक्तत्वात् ॥ कर्मण एव करणत्वाविवक्षया तृतीयायां 'कर्तृकरणे' इतिसमासप्रवृत्तिरितिप्रागुक्तं न विस्मर्तव्यम् ।

अत एव ' समुद्रयायी बन्दी च तैलिकः कूटकारकः ९८ 'इत्यादिनै कत्र तत्तदुपजीविन एव निर्दिश्यन्ते॥ "एता न्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान्॥द्विजातिप्रवरो विद्वा नुभयत्र विवर्जयेत् ॥ ६७ ॥ " इति ( मनुना ३ ध्या० ) उक्तेर्विगर्हिताचारानित्युभयत्र वर्जने हेतूक्त्या त्वेतदुप- जीविनामाचाराद्भ्रंशोनाचारे प्रवृत्तिश्चेत्येतौ स्वाभाविकौना न्तरीयकौ वेति-" द्विजस्याब्धौ तु नौयातुश्शोधितस्या- पिसंग्रहः " इति नाविकाविषयकः कलिवर्ज्योक्तो निषेधः " उभयत्र विवर्जयेत " इति चैतदर्थानुवादक एव न तद्भिन्नापूर्वार्थबोधकःगौरवात् ॥

किं च श्रुत्या स्मृतीनां बाधवत्प्रागुक्तरीत्या गत्यन्तर- सद्भावे स्मृत्या श्रुतेर्बाधायोगाच्छन्दोवत्सूत्राणीत्युक्तेः सूत्रेषु श्रुतित्वातिदेशेन तत्प्रयोज्यकार्यकारित्वस्य तत्प्र- योज्येतरबाध्यत्वाभावस्य चाङ्गीकारेण बोधायनोक्त- समुद्रयायिसंग्राहकप्रायश्चित्तस्य तदसंग्राहकताबोधक- कलिवर्ज्यप्रतिपादकपुराणवचनेनबाधनमन्याय्यम् ॥ अत एव " श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ॥ पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः " इति ( संग्रहे ) उक्तं संगच्छते ॥ एवं च प्रायश्चित्तेन कर्मत्या- गिनएव शुद्धिः स्यात् ॥

येतु "वसन्वा यत्र कुत्रापि स्वाचारं न विसर्जयेत् ॥ षट्कर्माणि च कुर्वीरन्निति धर्मस्य निश्चयः" इति (वृद्धपराशरेण १ ध्या०) वचनोक्तमुल्लङ्घ्य कर्माणि त्यजन्ति प्रायश्चित्तं च नानुतिष्ठन्ति तेषां विषये पुराणोक्तिर्निरवकाशेति तेषां संग्रहो नैव न्याय्यः । न च "समुद्रयायी बन्दी च" इत्यारभ्य "एतान्विगर्हिताचारानपाङ्क्तेयान्द्विजाधमान् ॥६७॥" इति (मनुना. ३ ध्याये) वचनेविगर्हिताचारानित्यनेन समुद्रयायिनामाचारभ्रंशो नान्तरीयक इत्युच्यत इति वाच्यम् ॥ धनिकानां दरिद्राणां वास्माकं तदुपयोगियावत्सामग्रीसंपादनस्य तत्र कर्तुमशक्यत्वेपि श्रीमतां महाराजादीनां संहतानां धनिकानां च समुद्रे नौयानादौ सदाचारोपयोगियावत्सामग्रीसम्पादनस्यानाचारसंपादकांशनिराकरणस्यचकर्तुंशक्यत्वात् ॥

एतेनैकस्मिन्विषये "समुद्रयायी बन्दी च" इति "द्विजस्याब्धौ तु नौयातुः" इति च निषेधद्वयोक्तिर्व्यर्था । अन्यतरेणैव तत्सिद्धेरिति परास्तम् ॥ उभयोर्ग्रन्थयोः कर्त्रोश्च भेदादित्युक्तत्वात् ॥ यथा मनुनोक्तोर्थो याज्ञवल्क्येन तथा याज्ञवल्क्येनोक्तोर्थो मनुनोक्त इति न तत्रान्यतरवैयर्थ्यमिति ॥ ननु कुतो वैयर्थ्यं नेति चेत् ॥ न ॥ देशकालद्रव्याणामैक्ये वैयर्थ्यमन्यथा तु न । प्रकृते तु स्मृति-

कर्तॄणां तदुपदेष्टॄणां तच्छ्रोतॄणां वा भिन्नभिन्नकालिकत्वेन भिन्नभिन्नदेशस्थत्वेन तदनुसारेण यावदंशस्यापि वक्तव्यतयोपदेष्टव्यतया च क्वचिदन्योक्तार्थस्योक्तिः क्वचिदन्यथोक्तिः क्वचिदधिकोक्तिः क्वचिन्न्यूनोक्तिः क्वचिद्विरुद्धोक्तिः क्वचिच्छ्रोतृविश्वासायान्यस्मृतिकर्तृनामानिर्देशपुरःसरमनुवादश्चेत्यदोषात् ॥ एवं वेदवेदाङ्गपुराणादिकोशकाव्यालङ्कारलोकव्यवहारादिष्वपीति नानुपपत्तिः ॥ नचैवं य एवांशाः श्रुतास्त एवानुष्ठेया नान्येनुष्ठेयाः स्युरन्यविषयकज्ञानस्यैवाभावेतदनुष्ठानायोगात् । कालान्तरे समभिव्याहारबलेन तज्ज्ञानेप्यनुपदिष्टत्वेन तत्र प्रवृत्त्यसंभवेनानुष्ठानायोगाच्चेति वाच्यम् ॥ समभिव्याहारबलानुसारेणोपदेष्टुपदिष्टांशमाश्रित्य स्वतो वैदिकमन्त्रादिविनियोगविचारे प्रवृत्तस्योद्भूताकाङ्क्षाशान्तेरनेकसहायसाध्यत्वेन तत्र प्रवृत्त्युत्पत्तेरदोषादितिदिक् ॥

किंचात्र भरतखण्डीयेषु मध्ये यदा यानुद्दिश्य "द्विजस्याब्धौ तु नौयातुः" इति निषेधः कृतस्तदा ते दृढतमनौकानिर्माणादिषुमहामहानौकानिर्माणादिष्वतिदीर्घकालिकनौकायात्रादिषु अतिदीर्घनौकायात्राकालिकपानपाकादियोग्यशुद्धमधुरजलनिर्माणंतत्संग्रहादिषु तादात्विकापायपरिहारादिषु रात्रिन्दिवंतन्नयने तद्रक्षणेऽन्यदेशगमने क्रियमाणे तत्रत्यलोकैर्मैत्र्याः शात्रवस्य

च संभवे तदनुग्रहनिग्रहयोरुपयोगियावत्सामग्री निर्माणे तत्समीकरणे गन्तव्यस्थानावगमे तन्नयन-मार्गभ्रंशे तन्नयनकालिकभ्रष्टमार्गपरिशोधने तत्कालम-ग्ननौकोद्धरणतत्समीकरणतद्गतप्राणितद्वस्तुरक्षणे तत्रत्य-चोरनिग्रहे तन्नाविकनिग्रहादिष्वसमर्थतामतिगम्भीरहृ-दयमात्रगोचरातिदुरूहासंख्यप्रजाहितकारिमहामहाकार्य-साधनसंपादनोत्साहादिष्वप्यतिपरमदौर्बल्यमकुशलाग्र-णीभावमतिभीरुतां दृढसङ्कल्पानभिज्ञतामल्पतोषित्वमि-त्यादिदोषासंख्यतां च बहुधानुभूयानुभूयैवारब्ध इत्येव युक्तम् ॥ इदानीं तूक्तानामन्यासां चानुपपत्तीनामभावेन कदाचित्संभवेपि परिहर्तुं शक्यतयोपपत्तीनां चसत्वेन कदाचिन्नाशेप्यन्येषां संपादयितुं शक्यतया च निषेध-स्याप्रसरः ॥ यथा वसन्तेत्र क्षेत्रे ब्राह्मणान्भोजयतीति सामान्यतउक्तावप्यतिरोगिणोतिदूरदेशस्थान्मृतानुत्पत्स्य मानांश्च विहायान्ये एव भोज्यन्ते यथा वा नप्रातर्न रात्रौ न निशि नाशौचे न तत्करणसामर्थ्यशून्ये दिवसे न स्वमरणे न स्वस्य देशान्तरगमने तद्वत् "द्विजस्याब्धौ तु नौयातुः" इत्याद्युक्त्वा "एतानि लोकगुप्त्यार्थं कलेरादौ" इत्यत्रापि कलाविति द्विजस्येति नौयातुरिति सामान्यत उक्तेष्वपि तन्मृत्युत्तरास्मिन्काले कलियुगस्यसत्त्वेपि सर्वदा वा कलि-

युगसत्त्वेपि द्विजानामेवासंग्राह्य सः। इति पादचारिणि भयानचारिणि नौयातृत्वाभाववति वा नौयानसमाप्त्युरस्मिन्कालविशेषे वस्तुविशेषे देशविशेष एव पर्यवसानं वाच्यं त्वया पीति तथासामर्थ्यादिशून्यविषयो "निवर्तितानि विद्वद्भिः" इति निषेध इति कल्प्यते॥ अतएव "नाकारणो हिशास्त्रेस्ति धर्मः सूक्ष्मोपि जाजलेः॥ कारणाद्धर्ममन्विच्छन्स लोकानाप्नुते शुभान्॥ यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति "प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्। त्रयं सुविदितं कार्यं धर्मं शुद्धिमभीप्सता॥५॥ आर्षं धर्मोपदेशं च वेदशास्त्राऽविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ ६॥" इति (मनुना० १२ ध्या०) च वेदशास्त्रलोकाविरोधिनः सर्वस्यापि धर्मस्य सकारणकत्वोपपादनं संगच्छते॥ अत्र जाजलेरित्युपलक्षणम्॥ अन्यथा यत्र कारणोपन्यासमन्तरा धर्मः स्मृतिष्वन्यत्र वोक्तस्तासामुन्मत्तप्रलपितत्वापत्तेः इदंतु न युक्तमिति॥ स्मृतिकर्तॄणां महर्षीणां मन्वादीनां सर्वज्ञानां लोकहितकारककर्मबोधनार्थमेव प्रवृत्तेः "प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते" इति न्यायाद्वृथा तेषां प्रवृत्तिरित्युक्तेरयुक्तत्वाच्च॥ अतएव "निषेधाश्च युगप्रयुक्तानुपपत्तिमूलकाः। अन्यथा

विध्युत्पत्तिवैयर्थ्यात् ॥ अनुपपत्तिश्च दृष्टाऽदृष्टा चेति द्विविधा । तत्र दृष्टानुपपत्तिमूलकानामनुष्ठानमननुष्ठानं चानिन्दितम् । यत्रानन्यथासिद्धप्रतिप्रसवविधिरुन्नीयते तत्र दृष्टानुपपत्तिः कल्प्यते । "दूराध्वोपगतं श्रान्तम्" इत्यादिकं " राज्ञश्च सूतकं नास्ति यस्य चेच्छति पार्थिवः " इत्यादिं चोक्त्वा "शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः" "यजेत वाश्वमेधेन" इत्याद्यनुपपत्त्या दूरयात्रादिविधिरुन्नेयः" इति ( पराशरमाधवीये १२ ध्यायान्ते ) उक्तं संगच्छते ॥ अन्यथाश्वमेधानुष्ठानार्थकेऽश्वेमुक्ते केनापि राज्ञाप्रत्यन्तदेशद्वीपान्तरादिस्थेन गृहीते तज्जयार्थं ससैन्यस्यसामात्यपुरोहितस्यसवणिजोराज्ञःप्रसक्तेगमने 'समुद्रयात्रास्वीकारः' इति "द्विजस्याब्धौ तु नौयातुःशोधितस्यापिसंग्रहः" इति च वचनाभ्यांप्रतिषिद्धे सति तत्र गमनासंभवेन तज्जयासंभव इति तैस्सह गतेन राज्ञा जयं लब्ध्वाप्रत्यागतेन कृत प्रायश्चित्तेनापि संव्यवहारशून्येनाश्वमेधः कर्तुमशक्य एवेत्येवं हेतुद्वयेनाश्वमेधाविधानमनर्थकं स्यात् । अमात्यपुरोहितादयो राजधर्मनीत्यादिग्रन्थानुसारेण प्रायो ब्राह्मणा एव नान्य इत्यस्य निश्चितत्वात् ॥

किंच "द्विजस्याब्धौ तु नौयातुःशोधितस्यापि संग्रह" इत्याद्युक्त्वा" एतानि लोकगुप्त्यर्थं कलेरादौ महात्माभिः ॥

निवर्तितानि कर्माणि व्यवस्थापूर्वकं द्विजैः" इति ( आदित्यपुराणे ) वचने "कलेरादौ" इत्युक्तेः "द्विजस्याब्धौ तु नौयातुः" इति नौयानरूपं कर्म कलेरादौ निवर्तितमित्यन्वयेन कलेरादावेवैतानि कर्माणि निवर्तितानि न तत ऊर्ध्वं ततः पूर्वं वेतीदानीं समुद्रे नौयातुः द्विजविषये तत्कर्मनिवर्तकताया अन्याय्यत्वात् ॥ यद्वय-मपि कल्यादिभाग एव नान्त्यो न मध्यमो वेति तत्कर्मे-दानीमपि निवर्तयितुं शक्यमेवेत्युच्यते तथात्र वचने "लोकगुप्त्यर्थम्" इत्युक्तेर्लोकरक्षणमेवैतत्फलं न तु तन्ना-शनमिति प्रतीत्या स्वेषामन्येषां च लोकानां रक्षणं नाम सुखेन पालनं येन कर्मणा भवेत्तदपेक्षया विरुद्धं नौकादेर्म-ज्जनादिनाबुभुक्षादिना वा तत्रत्यानां लोकानां द्विजाना मन्येषां च नाशप्रयोजकं यत्कर्म द्विजस्याब्धौ नौयानादि रूपं तत्कल्यादौ बहु जातमिति तदा तन्निवर्तितमिति सामान्यतस्तादृशानर्थोत्पत्तेस्तन्निरुद्धमित्यर्थावगमेपीदा-नीं तादृशानर्थोत्पत्तेः प्रायोऽसंभावितत्वेन तन्नि-रोधकल्पनाया अन्याय्यत्वात् ॥ न च "लोकगु-प्त्यर्थम्" इत्यत्र लोकपदेनेहपरयोरुभयोरपि लोक-योर्ग्रहणेनादृष्टहान्यभावायेदं निवर्तितामिति युक्तम् ॥ प्रमाणानां सामान्ये पक्षपातादिति वाच्यम् ॥ संभवति दृष्ट-

फलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वेन लोकपदेन प्रजानां परलोकातिरिक्तानां तदुपयोगिनामन्येषां चैव ग्रहणात् । एवं चैतदेकवाक्यतया " शोधितस्यापि संग्रहः " इत्यपि कलेरुक्तदोषापादके आदिभूते काल एव नान्यदेत्यर्थबोधकः । नौकायां गमनकाले सहस्रान्तरप्रजानां नावो मज्जने स्वस्य प्रयोजकत्वेन तादृशमहामहापातकिनः संग्रहो न युक्त इति तदाशयात्॥ न च ब्राह्मणस्य सहस्रान्तरप्रजानाशप्रयोजकत्वं कथमिति वाच्यम् ॥ तत्र "द्विजस्य" इत्युक्त्या ब्राह्मणक्षत्रियविशां तेनहसगमनात्तत्र क्षत्रियस्य राज्ञः साक्षात्प्रयोकत्वंतदुपयोगिव्यवस्थाप्रयोकत्वं पुरोहितामात्यादेस्तदुपयोगिसामग्रीसंघटनतदीयाभरणादिसंग्रहरक्षणतद्रवादिरक्षणादिना प्रयोजकत्वं वैश्यस्यै तत्सभिकत्वादिना वा सर्वेषां द्विजानामित्यदोषात् ॥ किंच गृह्यतां वा लोकपदेन परलोकः स्वर्गादिरपि ॥ एवं च "विहितस्याननुष्ठानात्" इत्यादिनोक्तरीत्यासमुद्रे नौयातुः स्वीयनित्यनैमित्तिककाम्यकर्मणां तदा कलियुगादौ साङ्गोपाङ्गतया तत्तत्कर्मानुष्ठानासंभवं मन्यमानैर्महात्मभिरिदं नावा समुद्रयानं द्विजस्य निषिद्धमिति तदा तन्निषेधस्य युक्तत्वात् ॥ यदि तेन स्थल इव नौयानेपि यथावत्कर्माण्यनुष्ठीयन्ते इत्युच्यते तदा समुद्रयायिन-

स्तदभाववतोपिप्रायाश्चित्ताभावः समानएवेति दिक् ॥

स्यादेतत्॥ "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इति (आदित्यपुराणे) कलिवर्ज्यवचनेन निषेधो द्वारकारामेश्वरगङ्गासागरकोङ्कणादिदेशयात्रिकांस्तथासर्वदेशेषु समुद्रनदीतीरेषु विद्यमाननगरग्रामवासिनस्तेषां गमनागमनयोरब्धावन्यत्र च निर्विरोधेन प्रवृत्तेः रूढमूलत्वेन, नद्यादौ नौयातॄन्केवलं पादादिना समुद्रेस्नानार्थं गन्तॄंश्चत्यक्त्वा तेषांमध्येऽब्धौनौयातुर्द्विजस्य कृताकृतप्रायश्चित्तस्य संग्राह्यता कलौ न प्राप्नोति ॥ न नु "शत (दश) योजनविस्तीर्णं शतयोजनमायतम् ॥ ६८ ॥ रामचन्द्रसमादिष्टंनलसञ्चयसंचितम् । सेतुं दृष्ट्वासमुद्रस्य ब्रह्महत्यां व्यपोहति ॥ ६९ ॥ इति (पराशरेण १२ ध्या०) उक्तेः रामेश्वरादिगमनं विधिप्राप्तमिति कलौ न तत्र गमने संग्रहाभावः॥ न चायं विधिः। लिङ्लोडादिप्रत्ययान्तपदाभावादितिवाच्यम् ॥ "चातुर्विद्योपपन्नस्तु विधिवद्ब्रह्मघातके । समुद्रसेतुगमनं प्रायश्चित्तं विनिर्दिशेत्" इति (पराशरेण १२ ध्या-६४ ॥ श्लो) विधिर्निर्दिश्यत इति चेत् ॥ न ॥ विधीनां युगान्तरविषयत्वेनाप्युपपत्तेः ॥ न च युगान्तरे कलिवर्ज्यवचनं नैव प्राप्नोतीति तदा रामेश्वरादियात्राविधानमनावश्यकमिति वाच्यम्॥ युगान्तरे-

पि ब्रह्महत्यादौ दोषान्तरे वा तन्निवारकैतद्विध्यभावे रामेश्वरयात्रासु लोकानां प्रवृत्त्ययोग इति तदर्थं तद्विधेरावश्यकत्वादिति चेत् ॥ न ॥ "शोधितस्यापि संग्रहः" इति वचने शुन्धधातुनाप्रायश्चित्तग्रहणेन "एतानि लोकगुप्त्यार्थं कलेरादौ महात्मभिः । निवर्तितानि कर्माणि व्यवस्थापूर्वकं द्विजैः" इति (बृहन्नारदीये कलिवर्ज्ये) चवचनात्प्रत्यासत्त्या सामुद्रिकनौयानप्रयोज्यप्रायश्चितं कृतवतएवासंग्रह इत्यर्थादितिकेचित् ॥

तन्न ॥ "समुद्रयानगमनं ब्राह्मणस्य न शस्यते । संभवेद्यदि मोहेन पुनःसंस्कारमर्हति" इति ( पराशरेण ) क्षत्रियवैश्ययोर्नावा समुद्रयानसंभवेपिब्राह्मणस्य समुद्रयाने पुनस्संस्कारेण शुद्धिसंग्रहौ, अन्ययोः प्रायश्चित्तेन शोधेप्यसंग्रहः इत्यर्थस्य बृहन्नारदीयवृद्धपराशरवचनयोर्व्यवस्थयोपपादकत्वेन चारितार्थ्यात् ॥

किं च कलिवर्ज्यवचने "कलेरादौ" इत्युक्तेःकल्यादावेवासंग्रह इत्यर्थ स्यापि संभवेनेदानीं संग्रहे निषेधाप्राप्तिः ॥ न चायमपि कल्यादिरेवेतिवाच्यम् ॥ अन्यविषयेष्वपि कलिवर्ज्येषु तथात्वापत्तेः ॥ एतेन पूर्वोक्तपराशरवचनेन ब्राह्मणे निषिध्यमानस्यसमुद्रयानस्यानुवादकएव बृहन्नारदीयादिकलिवर्ज्योक्तोनिषेध इति ब्राह्मणेतर-

क्षत्रियवैश्ययोः प्रायश्चित्ततदसंग्रहौ तद्याननिषेधश्च नेति तयोर्यानं सुलभमेवेत्यपास्तम्॥ "विप्रादिनौसंस्थितिम्" इति (कालनिर्णयसिद्धान्तस्थकलिवर्ज्ये) विप्रपदवैयर्थ्यापत्तेः। किं च तयोस्तया गमने निषेधाद्यभावेपि तत्र ब्राह्मणसहायमन्तरा तयोर्गमनं न संभवत्येव। यतः शास्त्ररीत्या राज्ञोऽमात्यपुरोहितविदुषां सामीप्य मत्याश्यक मिति धर्मशास्त्रेषु प्रसिद्धम्। ते च क्षत्रियस्य पार्श्वेब्राह्मणाएव भवितुमर्हन्ति नान्ये। तथाहि। "मौलाञ्छास्त्रविदःशूराल्लब्धलक्षान्कुलोद्गतान्। सचिवान्सप्त पञ्चाष्टौ प्रकुर्वीत परीक्षितान्॥५४॥"इत्याद्युक्त्वा "सर्वेषां तु विशिष्टेन ब्राह्मणेनाविपाश्चिता। मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम्॥ ५८॥" इति (मनुना ७ ध्या०) तथा" पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम्। दंडनीत्यां च कुशलमथर्वाङ्गिरसेतथा॥३१३॥" इति (याज्ञवल्क्येन १ ध्याये) चोक्तेर्मन्त्रिपुरोहितादीनां ब्राह्मणानां स्वस्वराजकीय लौकिकवैदिकव्यवहारादिकुशलानां षाड्गुण्यादिनिपुणानामावश्यकत्वप्रतिपादनेनैतैर्विना तत्कार्यासंभवात्सहै वैतैर्गमनागमनेकार्यें अन्यथा नेति सिध्यति। राजाभिन्न क्षत्रियस्यापि पुरोहितर्त्विगावश्यकतास्त्येव। तथा वैश्यस्यापि। ततश्च ब्राह्मणमन्तरान्यत्र कुत्राप्यनयोर्न गमना

गमनेस्त इति गमनागमनयोः क्षत्रियाभ्यनुज्ञान्यथा स्यादिति तथैव ब्राह्मणस्य तत्र गमनाभ्यनुज्ञा सदाचरेण सर्वत्र स्थितस्य प्रायश्चित्ताभावश्चेति कल्प्यते। अधिकमग्रे स्पष्टी भविष्यति। नचासंग्रह इत्यस्य वैयर्थ्यमिति वाच्यम्। "असंग्रहः" इत्यत्राप्रशस्तार्थक नञा समासाश्रयणेनादोषात्। अत एव "समुद्रयायी वान्ताशी" इत्यादिना श्राद्धे निषेधः सार्थकः। नौयानं विना समुद्रदर्शनार्थयातुरपि श्राद्धे निषेधापत्तेश्च ॥ मम तु "समुद्रयानगमनं ब्राह्मणस्य न शस्यते" "शोधितस्यापिसंग्रहः" इत्यादौ श्राद्धे ग्रहणाभावेनान्यत्र ग्रहणे नच प्रशस्तः संग्रह इति समञ्जसम् ॥

नच विनिगमनाविरहात् "समुद्रयायी" इति सिद्धे "शोधितस्यापिसंग्रहः" इति व्यर्थं स्यादिति वाच्यम्। वचनद्वयप्रामाण्याद्विकल्पापत्तेः। नच कलिवर्ज्योक्तस्य "शोधितस्यापिसंग्रहः" इत्यस्य युगान्तरे प्राप्त्यभावेन तत्र श्राद्धे निषेधाय "समुद्रयायी" इत्यावश्यकमिति प्रागुक्तं युक्तमिति वाच्यम्। एवमपि तेनैव सर्वत्र श्राद्धे संग्रहाभावसिद्धौ कलिवर्ज्यं तदुक्तेर्वैयर्थ्यस्य सुस्थत्वात्। "समुद्रयायी" इत्यस्य युगान्तरविषयकत्वे तत्साह-

चर्यात्तत्र पूर्वोत्तरपठितानां वान्ताश्यादीनां कलियुगे श्राद्धे निमन्त्रणीयत्वापत्तेश्च । एवंच युगान्तरे यथा तथा वा समुद्रयातुः प्रायश्चित्ताभाव इति तस्य श्राद्धे निमन्त्रणीयत्वप्राप्तौ तन्निषेधाय समुद्रयायीत्यावश्यकम् । कलियुगे तु नित्यकर्मादिकं त्यक्त्वा समुद्रयातुः प्रायश्चित्तमावश्यकमिति कृतप्रायश्चित्तस्य सर्वत्रैव श्राद्धेपि संग्रहे प्राप्ते तन्निषेधाय "शोधितस्याापिसंग्रहः" इत्यप्यावश्यकम् ॥ अतएव "श्रुतिविक्रयिणो यत्र परपूर्वाः समुद्रगाः । असमानान्याजयन्ति पतितास्ते प्रकीर्तिताः । समुद्रयायी कृतहा रथ्यासमयभेदकः । वेदनिन्दारतश्चैव ते वर्ज्याः श्राद्धकर्मसु" इति (उशनसा) उक्ते "समुद्रगाः पतिताः" "समुद्रयायी" इति आद्यस्य कर्मत्यागप्रयोज्यपातित्येन प्रायश्चित्ते कृते तत्प्रयोज्येसकृद्याने पि द्वितीयस्यासकृत्सकृद्वा याने कर्मानुष्ठानत्यागाभावप्रयोज्ये निमन्त्रणे प्राप्ते तन्निषेधार्थं समुद्रायातुर्द्विधा निर्देश उपपद्यते ॥ अन्यथा दर्शनाद्यर्थं समुद्रयातुरपि निषेधापत्तेश्च । मम तु समुद्रयायीत्यादेर्द्विजस्याब्धौतु इत्यादेश्चैकवाक्यतया परित्यक्तकर्मविषयक एव स इति न दोष इति दिक् ॥

"किंच समुद्रादूर्मिः" इति ( ऋग्वेदशाकलशाखाया

मेकादशर्चसूक्तपाठःसमुद्रयाने प्रायश्चित्तमिति ( ऋग्विधाने) इति तदेकमपि प्रायश्चित्तं बोद्धव्यम् ।

किंच "हविष्पान्तं जपेत्सूक्तं महापातकनाशनम् । दिनेदिने त्रिवारं तु विद्या श्रीः सत्कुले स्थिरा । सहस्रवेदसदृशं संज्ञानं तु सकृज्जपेत् । असाध्यं त्रिषु लोकेषु दशवारं दिवा सदा।सुरापस्तल्पगःस्तेनः संयोगिब्रह्मघातिनाम्। समुद्रयातुर्दोषश्च नश्यत्येव न संशयः । गर्हितान्नसमायोगे हविष्पान्तीयमभ्यसेत् । पवित्रं परमं ह्येतद्बोद्धव्यं च विचक्षणैः ॥" इति ( ऋग्विधाने ) प्रायश्चित्तविधिः" इति हविष्पान्तीयऋङ्मन्त्रपाठःऋग्विधाने प्रायश्चित्तमस्तीति नदोषः ।

किं चासकृत्समुद्रे नावा यान एव गन्तुः प्रायश्चित्तेन शुद्धिसङ्ग्रहोभवतः । बृहन्नारदीयकलिवर्ज्योक्तासंग्रहस्त्वसकृत्तत्र नौकया यायिनो भवति।अत एव"समुद्रयाने प्रायश्चित्तमाह ( ऋग्विधाने ) "सकृत्समुद्रयाने हि प्रायश्चित्तमुदाहृतम् । बहुकालाध्यवसने प्रायश्चित्तं तु नैव हि। कलौ द्विजोऽब्धौ याने तु प्रायश्चित्तेन शुध्यति । वर्षत्रयं व्रतं कृत्वा सहस्रं च हिरण्यकम् । ब्राह्मणेभ्यः प्रदद्याच्च शक्त्या गोदानमेव च " इति । सकृत्समुद्रयान एवेत्यवधारणेन सकृत्तद्याने प्रायश्चित्तविधानं संगच्छते ॥ ननु पराशरमाधवीये शूद्रसेवाप्रायश्चित्तप्रकरणस्थेन माधवाचार्येण तथा

मिताक्षरातृतीयाध्यायगतैकोननवत्युत्तरत्रिशतीश्लोकस्थ-विज्ञानेश्वरेण पतनीयप्रायश्चित्तप्रकरणस्थस्मृतिमुक्ता-फलकृता चेदं द्वादशवार्षिकं प्रायश्चित्तं चिरकाला भ्यासविषयमित्युक्त्येदमृग्विधानस्थं सकृद्याने प्राय-श्चित्तं "बहुकालाध्यवसने प्रायश्चित्तंन" इत्युक्तेर्विरुध्यत इति चेत् ॥ न ॥ शूद्रसेवायां प्रायश्चित्तस्य ( मिता-क्षरायां ३ ध्या३८९ श्लो.व्या. ) ( स्त्रियाः परपुरुषगमन-प्रायश्चित्तप्रकरणे स्मृतिमुक्ताफले ) लघोरुक्त्या तादृश शूद्रसेवाभिप्रायेणतत्प्रवृत्तेरित्यन्ये । बहुभिर्महर्षिभिः ऋ-ग्विधानादीनां बहुधा प्रणीतत्वात्तत्र कस्मिन्नृग्विधाने इदं प्रागुक्ते द्वे चेति प्रायश्चित्तत्रयमुपादिष्टमिति तु ग्रन्थानां तेषां दौर्लभ्येनात्रेदानीं निर्णेतुमशक्यत्वेपि कालान्तरे तं ग्रन्थं संपाद्य संशोध्य निवेदयिष्यामः । महाशयै-रमत्सरिभिर्विद्वद्भिर्भारतखण्डजीवातुधर्मादिदैवसम्पत्संल-ग्नबहुशल्योद्धरणकृपापरवशैर्दुरभिमानदूरैः "काकोपि जीवति चिरात्तु बलिं च भुङ्क्ते" इति ( भर्तृहरिशतके ) उक्तरीत्या स्वोन्नतिरेव सर्वेषामुन्नतिः, स्वपुत्रपौत्राणामना-पत्तिरेव जगतोऽनापत्तिः, "अन्नं बहु कुर्वीत" इति तथा "यया कया च विधया बह्वन्नं प्राप्नुयात्" इति च (तैत्तिरीयो-पनिषदि ) उक्तेरन्यायेन वा न्यायेन वा द्रव्यपुस्तकस्त्रीग्रह-

वृत्त्याद्यर्जनं कार्यं, परप्रतारणायैव धर्मशास्त्रादिज्ञानार्जनं कार्यं, परोपदेशायैव, चेत्यादिदोषदूरैरेतादृशानिःवचनानि ग्रन्थसंपादनद्वारा संशोध्य संलिख्य प्रेषणीयन्येतन्मुद्रण स्थाने ॥ केवलं स्वार्थपरतां परित्यज्य महते स्थिराय धर्मसंस्थापनाय भ्रष्टधर्मधनदारिद्र्यनिवर्तकशिल्पविद्यादिधनाऽदूरीकरणायैव प्रवृत्तानामस्माकं न कापि धर्महानिरिति परस्परं पर्यालोचनद्वारा भ्रष्टापमानकारिनीचाश्रयादिकं परित्यज्य मुनिवृत्तिषु मनः स्थिरीकृत्य तानन्तरा कथंजीविष्यामीति च भयाद्दूरीभूय क्वचित्काल मेवैतच्छरीरेण युक्तैरस्माभिस्तत्स्थितिसमयावधि निरुपाधिकतया सुखसाधनान्यर्जनीयानीति भारतखण्डकुटुम्बिभिः सर्वैरपि यशश्शरीरार्जने दत्तदृष्टिभिः स्वस्वतपस्तेजोवृद्धौ चित्तं दृढमास्थापनीयम्।

किं च ब्राह्मणस्य नौकया समुद्रे याने त्रैवार्षिकव्रतं सहस्रहिरण्यदानं च प्रायश्चित्तं ( गौतमधर्मसूत्रे प्रायश्चित्तप्रकरणे ९ मे खण्डे) उक्तं न तु कलौ संग्रहाभावोपि। युगान्तरीययानविषयमित्यादिशङ्का तु प्रागुक्तदिशा समाधेया।

किं च "द्विजस्याब्धौ तु निर्याणं शोधितस्यापि संग्रहः" इति बृहन्नारदीयोक्ते वचने कलौ समुद्रयानं वर्ज्यं, यत्र यत्र यानियानि प्रायश्चित्तान्युक्तानि तैस्तैः

शोधितस्यापि संग्रहो न कार्यः, यद्वा कार्येषु प्रामाणिकस्यैव नियोजनीयतया तदर्थं नानाप्रकारेणशोधितस्यापि ग्रहः ग्रहणंकार्यं न तु सम्यग्ग्रह इत्याशयकं वाक्यद्वयं "द्विजस्याब्धौ तु निर्याणम्" इत्येकं "शोधितस्यापि संग्रहः" इत्यपरमिति समुद्रे नावा यातुरेव संग्रहो न कार्यं इत्यर्थइत्यत्र न प्रमाणम् ॥ आद्यफलं त्वस्य न श्राद्धेनिनिमन्त्रणीयत्वंकिंतूत्तमब्राह्मणस्यैवेत्यर्थ बोधकमिति तत्सम्पत्तिसंपादनमेव। द्वितीयफलं तूक्तमेव। अन्यत्र चरितार्थत्वासमुद्रयातुः प्रायश्चित्तविषयेन प्रवर्तते द्वितीयवाक्यम्। नच "द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इत्यत्र पाठान्तरमेव मानमिति वाच्यम्। इतरकलिवर्ज्येषु "समुद्रयात्रास्वीकारः" इत्येतन्मात्रस्योक्तेरेकवाक्यतया-अप्रामाणिकत्वात्। एतेनोपस्थितं परित्यज्यानुपस्थितार्थसम्बन्धकल्पनमन्याय्यमित्यर्थकश्रुतानुमितन्यायेन समुद्रयातुः संग्रहो न कार्यं इत्यर्थं इति परास्तम् ॥

ननु द्वादशवार्षिकमिदं बोधायनोक्तं प्रायश्चित्तं चिरकालाभ्यासविषयमिति माधवीये यदुक्तं तन्न समुद्रयान विषयम् ॥ "शूद्रसेवायामाह" इति (माधवेनावतरणदानेन शूद्रसेवाविषयत्वात् इति चेत् ॥ न ॥ "शूद्रसेवायां प्रायश्चित्तमाहतुर्बौधायनापस्तम्बौ-

"यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः। चतुर्थकालमुदकाभ्युपायी त्रिभिर्वर्षैस्तदपहान्ति पापम्" इति। (कृष्णो वर्णः) शूद्रस्तदाज्ञाकरो भूत्वावृत्त्यर्थं सेवमानो ब्राह्मणो वर्षत्रयं चतुर्थे काले मितभोजी त्रिषवणस्नाय्येकदिवसे वा कृतं पापं हन्तीत्यर्थः" इति। (स्मृतिमुक्ताफले बोधायनेन) शूद्रसेवायामस्मात्पृथक्प्रायश्चित्ताभिधानात्। शूद्रसेवायामित्येतन्मात्रमनुक्त्वा सामान्यतः "पतनीयानां प्रायश्चित्तमाह" इति (स्मृतिमुक्ताफले वैद्यनाथदीक्षितैः) उक्तेश्च॥ माधवीये तथोक्तिस्तु स्मृत्युत्क्रमे तन्निर्देशमाश्रित्येति न दोष इति दिक्।

किंच धर्मार्थं नावा समुद्रे यानं न कार्यमित्येव तस्यार्थः "इमान्धर्मान्कलियुगे" इत्यत्र धर्मशब्दप्रयोगेण ज्ञायते न तु राजकार्यार्थं वाणिज्यार्थं कार्यान्तरार्थं वा समुद्रे नौकया यानं न कार्यमिति बृहन्नारदीयादिकलिवर्ज्यवचनेन प्रतिपाद्यते। अयमेवार्थो (मनुस्मृतिव्याख्यातृभिः) रघुनन्दनभट्टाचार्यैः प्रतिपादितः।

किंच "दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः। गोत्रान्मातृसपिण्डात्तुविवाहो गोवधस्तथा। नराश्वमेधौ मद्यं च कलौ वर्ज्या द्विजातिभिः" इति (पराशरमाध-

---

(१) एकदिवस वेति पाठो दृश्यते एकादिवसे कृतस्यैतस्यैनसस्त्रैवार्षिकमायश्चित्तविधिरयुक्त इतिचिंत्योऽयम्।

वीये १ ध्या० ३३ श्लो० व्या० ब्रह्मपुराणे) "देवराच्च सुतोत्पत्ति-र्दत्ता कन्या न दीयते। न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः" इति (तत्रैव क्रतुना) "ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा। कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्" इति (तत्रैव पुराणे) "समुद्रयातुः (त्रा) स्वीकारः कमण्डलुविधारणम्" इति (निर्णयसिन्धौ ३ परिच्छेदे पूर्वार्द्धान्त्ये बृहन्नारदीये) ब्रह्मपुराणेक्रतुमते बृहन्नारदीयमतेऽपि यात्रास्वीकार इति पाठपक्षे "अश्वालम्भं गवालम्भं सन्यासं पलपैतृकम्। देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत्" इत्यत्र पञ्चेत्युक्तेः कलावपि येषां पञ्चानामेव पुराणमते एतन्मते च वर्ज्यतोक्ता तेषां मते "समुद्रयातुः स्वीकारः" "समुद्रेऽब्धौ तु नौयातुः शोधितस्यापि संग्रहः" इति वचनयोरभावेन समुद्रयातुरकृतप्रायश्चित्तस्यापि निर्विरोधं संग्रहो भवत्येवेति तन्मतानुयायिनामस्माकं न कापि क्षतिः॥ न च तत्र पञ्चेत्यन्योक्तानां कलिवर्ज्यानामुपलक्षणमिति वाच्यम्॥ तत्तन्निर्देशेनैव सिद्धे "पञ्च" इति पदतत्स्वारस्ययोर्भङ्गापत्तेः। संख्यावाचकशब्दानामक्तपरिमाणत्वेन न्यूनाधिकव्यावृत्त्यर्थमेव प्रयोगस्य सर्वानुभवसिद्धत्वात्॥ अतएव यत्र लेखे शतं देयं गृहीतं वेत्यादिनिर्देशस्तत्र

शतमेव नाधिकं न न्यूनमपीति "द्वादशकपालं निर्वपेत्" इत्यादौ द्वादशकपालमेव न न्यूनं नाधिकमपीति च लौकिकालौकिकव्यवहारावपि संगच्छेते ॥ एवं च प्रायश्चित्तस्य तत्र नावागमनागमनयोर्नावश्यकता । न च द्विजेषु वर्णानामाश्रमाणां च विषये विहितानां धर्माणां त्यागेन निषिद्धानामधर्माणामनुष्ठानेन प्रत्यवाये सति प्रायश्चित्तानुष्ठानमावश्यकमिति वाच्यम् ॥ तस्य समुद्रयात्रामात्रविषयकत्वाभावेन तद्विषये उभाभ्यामप्यावाभ्यां प्रायश्चित्तानुष्ठानस्याभ्युपगतत्वात् ॥ नचैतन्मते दोषाभावेपि मतान्तरे दोषोस्त्येवेति वाच्यम् ॥ अन्यतरपक्षेण शास्त्रसम्मतेनोपपत्तिसंभवे पक्षान्तरेण दूषणाभिधानस्य लोकशास्त्रविरुद्धत्वात् ॥ न च मतान्तरारम्भणं व्यर्थमिति वाच्यम् ॥ तन्मतानुष्ठात्रभिप्रायेण तदुपपत्तेः॥

किंच " सिन्धुसौवीरसौराष्ट्रमावंत्यं दक्षिणापथम् । तीर्थयात्रां विना गत्वा पुनस्संस्कारमर्हति" इति ( स्मृतिचन्द्रिकायाम् ) सिन्धुसौवीरादीनां तीर्थयात्रार्थं गमनेऽभ्यनुज्ञानात्तत्सिन्ध्वादिसाहचर्यात् "सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः" इत्यत्रप्रत्यन्तवासिगमनमपि तीर्थयात्रेतरविषयकतया नेयम् ॥ एवं च तीर्थयात्रार्थं म्लेच्छदे-

शगमने नौकामार्गेण म्लेच्छदेशगमनेपि न दोषः । अत एव वङ्गादिदेशं दक्षिणापथं (नर्मदायाः दक्षिणस्थं देशम्) मक्कानामकमानन्दरामायणोक्तरीत्या (पुष्कलावतीत्यपरनामकं) विष्णुपादतीर्थंच बहवोजग्मुः। ततोदेशान्तरस्थानांतत्र म्लेच्छयवनाविरुद्धाचारव्यवहारवतां ब्राह्मणक्षत्रियवैश्यशूद्राणां स्वविरुद्धधर्माचाराणां तत्र प्रवेशो मा भूदित्यपक्ववस्तुविक्रयं निरुध्यान्येभ्यः पक्वान्येव सर्वाणि वस्तूनि क्रय्याणि नापक्वानि फलमूलतृणशाकपत्राणि वेति चिरात्तत्रत्यम्लेच्छादिराजादिनाऽतिक्रूराज्ञादानात्तदनुरोधेन व्यवहारप्रवृत्तेश्चातुर्वर्ण्यस्याद्यापि प्रायः प्रवेशो न भवतीति लौकिकी प्रतीतिः कर्णाकर्णिकया सर्वैर्भारतीयैः श्रूयते । तच्च विष्णुपददर्शनं तत्रैव वर्द्धमानलिङ्गेश्वरदर्शनं महाशा-

---

(१) महामैथुनं संकल्प्य शङ्करेणरतिसुखमनुभूयमाना पार्वती सुखविशेषलिप्सया पुरुषायितं स्वीचकार। तदा स परमेश्वरस्तामाकाशमनीनयत्। ततस्सास्वेष्टसिद्धिं प्राप्य निवृत्ता। ततस्सऋषिभिः प्रार्थितस्तल्लिङ्गं तथैव स्थापयामास । तच्चेदानीमपि वर्द्धमानमेवास्ते । निरुद्धापि तत्पूजा वर्षे वर्षत्रये वा कर्तव्या शिवरात्र्यादौ समयविशेष इति राजाज्ञप्तं समयविशेषं ज्ञात्वा तत्रागतानां जटिलानां साधूनां प्रवेशेऽत्युन्नतं पतनशीलं तदधस्ततो बहिः बहुभिर्निष्कास्य तत्रैव कोणे संस्थाप्यते । ततः यतो निष्कासितं तत्रत्यंपुनर्वर्धमानमेवास्ते । पुनः समये तैस्तथा क्रियते । पुनः प्राचीनं वर्द्धमानमेवास्ते काबूलराज्ये इति श्रुता गाथा मयात्र लिखिता प्रामाण्याप्रामाण्यान्यतरनिश्चयाय (२) मक्कायामीति महाशा-

लिग्रामदर्शनं च समुद्रस्थनावारोहणं म्लेच्छदेशगमनं चान्तरा न सिध्यतीति स्पष्टमेव ॥ एवं विद्याभ्यासार्थं सौलभ्येननानाशिल्पकर्माचरणोपायज्ञानार्थकं गमनमपि तीर्थयात्रैवभवति ॥ अतएव "निपानागमयोस्तीर्थ-मृषिजुष्टजले गुरौ" इति (नामलिङ्गानुशासनेऽमरसिंहेन) (तृतीयकाण्डे नानार्थवर्गे ८६ श्लो० ) तथा ( तट्टीकायां सुधायां "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजस्सु च । अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" इति ( मेदिनी ) इति तीर्थशब्दार्थविवरणं संगच्छते । अतएव "तीर्थे ये" इति ( पाणिनितन्त्रे ) ६ । ३ । ८७ ॥ "समान-तीर्थे वासी" इति (तत्रैव।४।४। १०७।) सूत्रे च तीर्थशब्दोऽध्यापके गुरौ प्रसिध्यति । एवंच श्रुतविद्याकलाद्यध्यापक-त्वात्तदुद्देश्यकयात्रा तथाऽमात्यस्यापि तीर्थत्वाविशेषादमात्यदर्शनार्थिका यात्रापि तीर्थयात्रैवेति नात्र म्लेच्छदेशगमन प्रयोज्यनिषेधःप्रसज्यते ॥ नच तीर्थपदेन रूढ्या ऋष्यादि-जुष्टमहाजलराशिभागस्यैव ग्रहणमिति वाच्यम् ॥ सतीर्थ्य इत्यादौ तीर्थशब्दस्याध्यापकादावपि रूढत्वात् ॥ नच

---

लिग्रामोस्ति। यदा तस्य पूजा तत्रत्येन राज्ञा निरुद्धा तदा स्वप्ने आगत्य राजानं भीषयामास । ततः कचिदनिष्टं तदनुसारेणापश्यत् । ततः पूजा प्रवर्तिताद्यावधि निर्निरोधेन भवतीत्यपि श्रुतोयमितिहासप्रामाण्य प्रामाण्यान्यतरपरिज्ञानाय मयात्र लिखितः ।

तीर्थयात्रेति न तत्रयोगरूढिरिति वाच्यम् ॥ तस्यापि योगरूढत्वात् । अतएव "क्वचिद्देशविशेषगमनेपि देवलआह । " सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च (ङ्गान्ध्रान्) गत्वासंस्कारमर्हति" इति। "एतच्च तीर्थयात्राव्यतिरेकेण द्रष्टव्यम्" इति (मिताक्षरायां ३ ध्याये २९३ श्लो०व्या०) उक्तं संगच्छते। अतएव "क्यास्पियन्" नाम्नः समुद्रस्य समीपे "वाकू" नामके नगरे "श्रीमहागणपतेर्मन्दिरम्" आस्ते। नच तदध्ययनादिकमत्रैव भवतीति किमर्थं तत्र गन्तव्यमिति वाच्यम् । "सिवल्सर्विस्" "व्यारिस्टर" इत्यादि परीक्षाः सर्वेषां शिल्पानां ज्ञानं तत्र गमनमन्तरा न संजानीतेतिस्पष्टंतद्विदाम् ॥ किंच "एष वाव समुद्रः यच्चात्वालः" इति याज्ञिकप्रकरणे (वेदे) उक्तेः याज्ञिकवेद्याःपाश्चात्त्यकुण्डरूपं तं यस्तरति तस्य समुद्रस्याभीक्ष्णं येन कृतं लंघनं तत्समुद्रयातुः स्वीकारः यः पूर्वमासीत्तस्य कलियुगे निषेध इत्यर्थोऽनेनोच्यते ॥ एवं "यज्ञोवा अवभृथः " इति ( वेदे ) उक्तरीत्यावभृथं त्यक्त्वा यज्ञाद्येऽगच्छंस्तेषां संग्रहः प्राग्यआसीत्स कलौ निषिध्यत इति नाङ्ग्लदेशगमने दोषलेश इति केचित् ॥

किं चार्यावर्तश्चार्याणां स्वीयं मुख्यं स्थानम् । आर्याः

त्यागेन भिन्नधर्माणोजाता इति प्राचीनोदीच्यव्यवहारापेक्ष यादाक्षिणात्यव्यवहारे भेदप्रदर्शनपरत्वेनादोषादितिदिक्॥

किंच भुवस्सर्वस्याअपि "एषउवैवसभूम्यन्तःयद्वेद्यन्तः" इति (ऋग्वेदे ऐतरेयब्राह्मणे १ काण्डे ५ मप्रपाठके १० मेनुवाके) उक्तमंत्रस्य " योयं वेदेरवसानदेशःसोयं भूमेरवसानभागः। एतावती वै पृथिवी यावती वेदिः" इति भूमित्वं वेदेराम्नातम्।" इति (तत्रैव भाष्ये) उक्तम्। एवं च सर्वस्या अपि भुवो यज्ञार्हत्वं सिद्धम्। नच म्लेच्छ देशस्याभावेन " म्लेच्छदेशस्त्वतः परः" इत्यादीनां प्रागुक्तवचनानां वैयर्थ्यापत्तिः॥ तथाभूतदेशस्याभावादिति वाच्यम्॥ आर्यावर्तेपि यत्र म्लेच्छगृहं तस्य म्लेच्छदेशत्वं तद्भिन्नस्यार्यावर्तत्वमिवसर्वत्रार्याणामार्यस्य वा गमने आर्यधर्मानुष्ठाने चार्यावर्तत्वमित्येवमुक्तकल्पनाया एवयुक्तत्वात्॥ अतएव "यस्मिन्नेव कस्मिंश्चिद्देशे श्रद्दधानो यजते ऋध्नोत्येव" इति (सामवेदे २६ शतिब्राह्मणे २ प्रपाठके) " यस्मिन्कस्मिंश्चिद्देशे श्रद्दधानोत्र फलं लभत एवेति आस्तिकस्सन्यजते स ऋध्नोति यथोक्तफलं प्राप्नोत्येव" इति तत्रत्यं माधवीयभाष्यं च संगच्छते॥

ननु " सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति" इत्यत्रत्येन "प्रत्यन्तवासिनः" इत्यनेन (पराशरमाधवीयमिताक्षरास्मृतिमुक्ताफलेषु प्रायश्चित्तभागे बोधायनदेवलाभ्याम्) उक्तेन म्लेच्छदेशगमनानिषेधेन सिद्धः समुद्रयानस्यापि निषेधः । सनिषेधो नतु तदभावे ॥ म्लेच्छदेशश्च—"कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ॥ सज्ञेयोयाज्ञियो देशो म्लेच्छदेशस्त्वतः परः" इति ( मनुना २ ध्या २३ श्लो० ) उक्तः ॥ न चानेन "सिन्धुसौवीर" इत्युक्तबोधायनदेवलयोर्वचनेन प्रत्यन्तवासिनो लोका यत्र कुत्र वा स्थिता न गन्तव्या इत्युच्यते नतु नावा समुद्रयातुः संग्रहाभाव इति । एवंच समुद्रयानानिषेधकत्वेन कथमस्योल्लेख इति वाच्यम् ॥ तेन तस्याग्रहणेपि तत्रत्यासिन्धुपदेन " उदन्वानुदधिः सिन्धुः सरस्वान्सागरोर्णवः " इत्यमरसिंहोक्तरीत्या समुद्रस्यापि ग्रहणात् ॥—॥ ननु सिन्धुशब्दोत्र देशपरः न समुद्रपरः । सौवीरादिसाहचर्यादिति चेत् ॥ न ॥ प्रत्यन्तवासिन इत्येतद्दार्ष्टान्तिकानुरोधेन देशपरत्वस्य वक्तुमशक्यत्वात् ॥ एवमङ्गवङ्गकलिङ्गाश्चेत्यत्रापि तद्देशस्थपरत्वमेव ॥ काकाक्षिन्यायेनोभयत्रप्रत्यन्तवासिन इत्यस्य दार्ष्टान्तिकत्वात् । एवं च तत्संसर्गो दोषावह इति

केचित्॥तन्न॥"सौराष्ट्रसिन्धुसौवीरमवन्तीं दक्षिणापथम् ॥ एतानि ब्राह्मणो गत्वा पुनः संस्कारमर्हति" इति बोधायनेन "हिमवत्कौशिकं विन्ध्यं पारंपर्यस्य पश्चिमम् ॥ तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति" इति व्यासेन "सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम् ॥ एतान्देशान्द्विजोगत्वापुनस्संस्कारमर्हति" इति "अङ्गवङ्गकलिङ्गसौवीरसौराष्ट्रावन्तिमात्स्यादिदेशगमने द्विजस्यपुनःसंस्कारः,तीर्थयात्रायां तु नेति च (स्मृतिमुक्ताफले आचारकाण्डे पुनरुपनयनप्रकरणे) वचनेनैकवाक्यतयादेशपरत्वस्य सिद्धेः ॥ नचास्यतदेशस्थपरत्वमपि पूर्वोक्तरीत्या दुर्वारमिति वाच्यम् ॥ "प्रत्यन्तवासिनः चण्डालप्रदेशाः" इति दशानिर्णय्यामुत्सवनिर्णये वेङ्कटनाथेन (स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे वैद्यनाथदीक्षितैः) "प्रत्यन्तवासिनश्चण्डालवासप्रदेशान्" इति चोक्तेः। इष्टापत्तेश्च। तद्विषये उभयोर्ग्रहणाच्च ॥ एतेन तीर्थविशेषवच्छूद्राणामसंस्कार्याणां सर्वेषामेवाङ्गवङ्गादिदेशगमनेऽन्यत्राप्राप्तोपनयनादिसंस्कारविधानद्वारा पूर्वपुण्यविशेषादेः संपादनोद्देशोमिदं वचनम्। अतएव "यथेमां वाचंकल्याणी

(१) अत्र "तीर्थयात्राम्" इति पाठो दशनिर्णय्यामुत्सवप्रकरणे पूर्वोक्तं वचनं ब्राह्मणपदघटितामिति भेदात्पृथगुक्तम्।

मावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्यायस्वाय चारणाय प्रियोदेवानांदाक्षिणायै दातुरिह भूयासमयं मे कामःसमृध्यतामुपमादो नमतु" इति (शुक्लयजुर्वेदान्तर्गत-माध्यन्दिनशाखायां २६ ध्यायेरयेमन्त्रे) अयमस्याभि-प्रायः। परमेश्वरःसर्वमनुष्यैः वेदाःपठनीया इत्याज्ञांददाति। तद्यथा। यथा येन प्रकारेण (इमाम्) ऋग्वेदादिचतुष्ट-यीरूपां (कल्याणीं कल्याणसाधिकां (वाचं) वाणीं (जनेभ्यः मनुष्येभ्यः। अर्थात्सकालजीवोपकाराय (आव दानि) (आ) समन्तात् उपदिशानि तथा सर्वैर्विद्वद्भिः सर्वमनुष्येभ्यो वेदचतुष्टयी वागुपदेष्टव्येति। नच जनेभ्यो द्विजेभ्य इति अध्याहर्तव्यम्॥ वेदाध्ययने वेदाध्यापने च तेषामेवाधिकारादिति वाच्यम्॥ उत्तरम-न्त्रार्थविरोधात्। तथाहि॥ कस्यकस्य वेदाध्ययनश्रवणे धिकारः इत्याकाङ्क्षायामिदमुच्यते॥ (ब्रह्मराज-न्याभ्यां) ब्राह्मणक्षत्रियाभ्याम् (अर्य्याय) वैश्याय शूद्राय (चारणाय) अतिशूद्राय अन्त्यजाय (स्वाय) स्वात्मी याय पुत्राय भृत्याय चसर्वैःसैषावेदचतुष्टयी श्राव्येति (यो-देवानां दक्षिणायै दातुः (इह) यथाहमीश्वरः पक्षपातं विहाय सर्वोपकारकरणेन सह वर्तमानःसन् (देवानां) विदुषां प्रियः (दातुर्दक्षिणायै) सर्वस्वदानाय प्रियश्च (भूयासं) स्यां

तथैव सर्वैर्विद्वद्भिरपि सर्वोपकारकं सर्वप्रियाचरणं मत्वा सर्वेभ्यो वेदवाणी श्राव्येति यथाऽयं मे कामः समृध्यते तथैवं कुर्वतां भवतामयं (कामस्समृध्यताम्) इयमिष्टसुखेच्छा समृध्यताम् सम्यग्वर्धताम् । यथावत्सर्वमिष्टं सुखं मामुपनमति ( उपमादोनमतु ) भवतोपि सर्वमिष्टं सुखमुपनमतु सम्यक्प्राप्नोत्विति मयायुष्मभ्यमाशीर्वादो दीयत इति निश्चेतव्यम् । यथा मया वेदविद्या सर्वार्था प्रकाशिता तथैव युष्माभिरपि सर्वार्था उपकर्तव्या नात्र वैषम्यं किञ्चित्कर्तव्यमिति ॥ कुतः ॥ यथा मम सर्वविषयार्थां पक्षपातरहितात्र प्रवृत्तिरस्ति तथैव युष्माभिराचरणे कृते मम प्रसन्नता भवति नान्यथेति ( एतद्भाष्ये ) उक्तं च संगच्छते इति वदन्तः परास्ताः ॥ प्रत्यन्नदेशगमने भरतखण्डकृतसंस्कारजन्यतज्जातीयोत्कर्षस्य नाशेन शास्त्ररीत्या दुष्कृतविशेषप्राप्त्या च तन्निवृत्तिद्वारा यथावदुत्कर्षप्राप्तये कृतसंस्कारस्यैव भरतखण्डएव पुनर्विधाने लाघवादप्राप्तविधाने गौरवाच्च ॥ अत्रैव वचनान्तरेषु "द्विजो गत्वा" "ब्राह्मणो गत्वा" इत्याद्युक्तेर्द्विजविषयकत्वस्यैव तदेकवाक्यतया सिद्धेश्च ॥ प्रायश्चित्तप्रकरणस्थत्वेनास्य वचनजातस्यापूर्वसंस्कारविधायकत्वायोगाच्च ॥ तथात्वे पुनः पदवैयर्थ्यापत्तेश्च ॥ आस्तिकाभास-

कृतभाष्यमुदास्य ( कल्याणीं ) कल्याणकरीं मोक्ष प्रापिकां ( वाचं ) महावाग्रूपां ( ब्रह्मराजन्याभ्यां ) मनः प्राणाभ्याम्। "मनो वै ब्रह्म" इति ( शतपथब्राह्मणे १४। ६ । १० । १४ ) " प्राणो वै क्षत्रम्" ( शतपथब्राह्मणे १४ । ८ । १४ । ४ ) ( शूद्राय ) भूतात्मने ( अर्याय अपानादेः समूहाय । "विशो वै मरुतः ।" इति ( शतप० ब्रा २ । ५ । १ । १२ ( स्वाय ) आत्मने ( अरणाय ) अन्तर्यामिणे ( जनेभ्यः ) इन्द्रियसमूहेभ्यः । ( आवदानि ) सर्वतो ब्रवीमि । ततोहमात्मप्रतिबिम्बः ( इह ) यज्ञे ( देवानां दक्षिणायै । इन्द्रियरूपदक्षिणादानाय ( दातुः ) ब्रह्मणः ( कामः ) मोक्षाख्यः ( समृध्यतां ) सफलो भवतु ( अदः ) अमुकःकामः मामुपनयतु इति परमास्तिकमणिकृतव्याख्यानस्यैवादरणीयत्वाच्च ॥ निष्कामाभ्यां सर्वलोकहितैकनिरताभ्यां सर्वलोकसंमतैरतिपरमसूक्ष्मदृष्टिभ्यां सर्वज्ञाभ्यां श्रीमदाचार्यशिरोमणिव्यासजैमिनिमहर्षिभ्यां कृतैः पूर्वोत्तरमीमांसासूत्रैः ( अपशूद्राधि करणे १ ध्या० ३ पादे ३३–३८।जै०६।१ २५–३८। शूद्रस्य वेदयागेचाधिकाराभावस्य व्यवस्थापितत्वाच्च ॥ अधिकमन्यत्र स्पष्टम्। तत्प्रतिपादितार्थस्य सर्वेषु परमानुग्रहरूपत्वात् ॥ अल्पज्ञत्वेनान्येषां नव्यन-

व्यतराणामुक्तेः सर्वथैवानादरणीयत्वाच्च ॥ एवंच तस्य देशपरत्वेन देशनिषेधकत्वेपि समुद्रयाननिषेधकत्वायोगात्समुद्रयानं कार्यमेवेति सिद्धम् ॥

किंच प्रत्यन्तवासिपदेन द्वीपान्तरग्रहणेपि तत्प्रतिषिद्धदेशगमन निषेधो ब्रह्मचारिण एव न गृहस्थस्य ॥ अत एव बोधायनः "अथोपनीतस्य व्रत्यानि भवन्ति । नान्यस्योच्छिष्टं भुञ्जीतान्यत्र पितृज्येष्ठाभ्याम्।न स्त्रिया सह भुञ्जीत। मधुमांस श्राद्धसूतकान्नानि दशासन्धिनीक्षीरं छत्राकनिर्यासौ विलापनं गुडान्नं गणिकान्नमित्येतेषु पुनस्संस्कारः। प्रतिषिद्धदेशगमनमित्येके । अथाप्युदाहरन्ति सिन्धुसौवीरसौराष्ट्रमवन्तीं दाक्षिणापथम् । एतानि ब्राह्मणो गत्वा पुनः संस्कारमर्हति" इति (निर्णयसिन्धौ तृतीयपरिच्छेदे पूर्वार्द्धे पुनरुपनयननिरूपणप्रकरणे) उक्तं संगच्छते॥अत्र सिन्धुसौवीरेत्यादिकमुपलक्षणम् । अत्रैव प्रकरणे ( चन्द्रिकायां ) बोधायनः—"सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः । अङ्गवङ्गकालिङ्गांश्च गत्वा संस्कारमर्हति" इत्युक्तस्यापि ॥ न चोपनीतस्येति बोधायनीयपदेन गृहस्थोप्युपनीतस्सन्नेव ग्रहस्थो द्विजो भवतीति गृहस्थ द्विजस्यापि ग्रहणंस्यादेव।ब्रह्मचारिमात्रविषयकत्वे मानाभावादिति वाच्यम् ॥ द्विजस्येत्यनुक्त्वोपनीतस्येति

वक्तुः सर्वज्ञस्य बोधायनस्य महर्षेर्यौगिकार्थाननुसन्धानेन प्रयोग इत्यल्पज्ञत्वकल्पनापेक्षयाचार्यसमीपे वेदशास्त्राध्ययनार्थं नीतस्याध्ययनसमाप्त्युत्तरं ततः प्रत्यावर्त्तनादिसमये उक्तदेशगमनाय प्रवृत्तस्येत्यर्थकल्पनाया उक्तत्वात् ॥ नच ग्रहस्थोप्युपनीत एवेति योगार्थो भूतार्थकप्रत्ययेन भूतकालितया प्रतीयत एवेति नानुपपत्तिरिति वाच्यम् । अत्रैवाग्रे उक्तस्य "न स्त्रिया सह भुञ्जीत मधुमांसश्राद्धम्" इत्यादिनिषेधस्यब्रह्मचारिविषयकत्वेनकृतत्वाद्ब्रह्मचारिण एव ग्रहणात् ॥

किंच "अर्थद्वारेणायं शब्दः प्रवृत्तो म्लेच्छानां देश इति । तत्र यदि कथंचिद्ब्रह्मावर्तादिदेशमपि म्लेच्छा आक्रमेयुः तत्रैवावस्थानं कुर्युर्भवेदेवासौ म्लेच्छदेशः । तथा यदि कश्चित्क्षत्रियादिजातीयो राजा साध्वाचरणो म्लेच्छान्पराजयेत चातुर्वर्ण्यं वासयेन्म्लेच्छांश्चार्यावर्त इव चण्डालान्व्यवस्थापयेत्तदा सोपि स्याद्यज्ञियो देशः । यतो न भूमिः स्वतो दुष्टा । संसर्गाद्धिसादुष्यत्यमेध्योपहतेव । प्रागुक्तदेशव्यतिरेकेणापि सतिसामग्र्ये त्रैवर्णिकेनाऽकृष्णमृगचरणेऽपि देशे यष्टव्यमेव । तस्मादनुवादोऽयं "सज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः" इति (मनु० २ ध्या० ३ श्लो व्या० मेधातिथिना) उक्तरीत्या

म्लेच्छस्वामिकदेशस्यम्लेच्छदेशत्वंम्लेच्छाचारव्यवहारा नुष्ठातृस्थित्याश्रयप्रदेशत्वं च म्लेच्छदेशत्वमिति तथार्यस्वामिकदेशस्यार्यावर्तत्वमार्याचारव्यवहारानुष्ठातृ स्थित्याश्रयप्रदेशत्वमार्यावर्तत्वमिति चाश्रयणात् ॥ परन्तु द्वन्द्वैकवद्भावविधायके "शूद्राणामनिरवसितानाम्" इति ( पाणिनितन्त्रे।२।४।१०। सूत्रे महाभाष्ये ) "अनिरवसितानामित्युच्यते । कुतोऽनिरवसितानाम् । आर्यावर्तादनिरवसितानाम् । कः पुनरार्यावर्तः । प्रागादर्शात्प्रत्यक्कालयवनाद्दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । यद्येवं किष्किन्धगन्धिकं शकयवनं शौर्यक्रौञ्चमिति नसिध्यति । एवं तर्ह्यार्यनिवासादनिरवसितानाम् । कः पुनरार्यनिवासः । ग्रामो घोषो नगरं संवाह इति । एवमपि य एते महान्तःसंस्त्यायास्तेष्वभ्यन्तराश्चण्डालामृतपाश्चवसन्ति। तत्र चण्डलमृतपा इति न सिध्यति । एवं तर्हि याज्ञात्कर्मणोऽनिरवसितानाम् । एवमपि तक्षायस्कारं रजकतन्तुवायमिति न सिध्यति । एवं तर्हि पात्रादनिरवसितानाम् । यैर्भुक्ते पात्रंसंस्कारेण शुध्यति तेऽनिरवासिताः।यैर्भुक्ते पात्रं संस्कारेणापि न शुध्यति ते निरवसिताः इति ॥ ( तत्रैवकय्यटे)—"(निरवसिताः) बहिष्कृता उच्यन्ते। तत्रावधिप्रश्नः "कुत" इति ॥प्रागादर्शादिति॥ आदर्शादयः पर्वतविशेषाः

॥ दक्षिणेनेति ॥ एनवन्तः । एतत्पर्वतचतुष्टयमध्ये आर्यावर्तोदेश इत्यर्थः ॥ यद्येवमिति ॥ एतेषामार्यावर्ताद्बाह्यत्वादिति भावः॥ग्राम इति ॥ एतेष्वार्या निवसन्तीति भावः। तत्र ग्रामः प्रसिद्धः । ( घोषः ) गोमाहिष्यादिनिवासः- ( संवाहः ) वणिक्प्रधानः॥ संस्त्याया इति ॥ निवासविशेषाइत्यर्थः॥ ( मृतपाः ) डोम्बा इत्याहुः ॥ याज्ञादिति ॥ शूद्राणां पञ्चयज्ञानुष्ठानेऽधिकारोस्तीति भावः ॥ तक्षायस्कारमिति ॥ तक्षादीनां यज्ञाधिकाराभावादिति भावः ॥ संस्कारेणेति ॥ संस्कारः स्मृतिकारैर्द्रव्यशुद्धौपठितस्तेनैव नतदधिकेनेत्यर्थः ।"भस्मना शुध्यते कांस्यम् " इत्याद्युक्तस्मृत्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः । अनिरवसितानामिति निषेधबलादेव शूद्रशब्दोत्र त्रैवर्णिकेतरपरो न तु शूद्रत्वजातिपरः।" इति चोक्तेरूढोयं शब्दइति ज्ञायते ॥

"किंच-आपोवा इदं सर्वम्" इति ( श्रुतौ ) उक्तरीत्या सर्वस्यापि जलस्योष्मकाले समुद्रनदीसरस्तटाकादिसम्बद्धसूर्यरश्मिसम्बन्धजन्यधर्मबाहुल्यात्सूक्ष्मीभावविशदीभावप्राप्तिसमयसमुपनतोर्ध्वगतिमद्वायुनीतजलबिन्दुसन्दोहैक्यरूपमेघभावो वृष्ट्या वर्षासु सर्वत्र पृथिव्यां प्रवेशेन समुद्रनदीनदसरस्तटाककूपजल-

भावः फलपुष्पान्नरसभावश्च ततो मनुष्यपशुपक्ष्यादि-रक्तमज्जावीर्यादिभावश्चेति सर्वस्यापि समुद्राभिन्नत्वेन समुद्रत्वमित्यभेदेप्यौपाधिकदेशकालादिभेदेन समुद्रो नदीत्यादिव्यवहार इति न काचिदनुपपत्तिः । अन्यथा गङ्गा यमुनेत्यादिनियतभेदोऽसंभावित एव स्यादिति महोपप्लवः ॥ नच समुद्रस्य सिन्धुगङ्गासरस्वत्यादिनद्यादीनां च सृष्टिकालिकदेशापेक्षयेदानीन्तना देशाः प्रायोभिन्नाः । अतएव पुराणादिषु तत्तत्सृष्टिं तत्तत्परिमाणं तत्तत्स्थितिंतद्व्यत्यासादिकं च भिन्नभिन्नतया वर्णयन्ति पुराणेतिहासवेदिनः ॥ यथा पृथिवीपञ्चाशत्कोटियोजनविस्तीर्णा जलं तत्पञ्चगुणमित्यादिकं वर्णितम् । तस्मिन्प्रत्यक्षतः तत्परिमाणज्ञैः परिमीयमाणे पृथिव्याअत्यल्पपरिमाणत्वं दृश्यत इति पुराणाद्युक्तं न प्रमाणमिति वाच्यम्॥पृथिव्याः सृष्ट्युत्तरं पृथुराजेन समीकरणात्सेतुबन्धनसमयेऽनेकेषां पर्वतानां समुद्रे प्रक्षेपणान्नित्यं बहिरन्तश्च महानद्यादिप्रवाहेण वर्षाजलप्रवाहेण सगरपुत्रैः समुद्रभूम्योः खननेन भुवि गङ्गापातेनानेकेषां राज्ञामिदानीन्तनानामपि व्यवहारसौकर्याय तत्तद्देशकालवस्तुरीत्या पर्वतनदीपाषाणखनिनिधिस्थलादिव्यत्यासेन परिदृश्यमानमहापृथिव्या उपरि परितोपि पार्थिवजलादिपरमाणुप-

र्यन्तानां सूक्ष्मभागानामनेकयोजनपर्यन्तं व्याप्तेरित्येवं सर्वेषामेषां पर्यालोचनेनोक्तपरिमाणस्य किञ्चिन्न्यूनाधिक्येपि प्रामाणिकत्वसिद्धेः। एवं च सर्वस्यापि समुद्रत्वेन गङ्गायां समुद्रे वा नौकया याने वा न कोपि भेद इति न प्रायश्चित्तलेशावकाशः।

किंच-"समुद्रो वा एष यदहोरात्रस्तस्यैतेगाधतीर्थें यत्सन्धी तस्मात्सन्धौ होतव्यमिति कात्यायनब्राह्मणं भवति नक्षत्रं दृष्ट्वा प्रदोषे निशायां वा सायम्" इति(आपस्तम्बे न) सायंप्रातःकर्तव्यहोमकालस्य चातुर्विध्यनिरूपणावसरे "अहोरात्रः समुद्रस्तस्य सन्धिद्वयं तीर्थम्" इत्युक्तम्॥ तथा चाहोरात्रं नौकायानं यः करोति तस्य (शोधितस्यापि स्नानादिना संजातशोधस्य संजातनाविकादिस्पर्शजन्यदोषनिरासस्य कुत्रापि कर्मणि संग्रहो न कार्यः। स्नानेन शुद्धावपि सन्ध्यादिमुख्यकर्मकाले तत्परित्यज्य नौयाने प्रवृत्तत्वात्।ततश्च समुद्र इव यत्र कुत्र वा नद्यां नौयानं कर्तुरपि सन्ध्यादिकं परित्यज्य नौयातुः स्नानादिना शोधं प्राप्तस्यापि कुत्रापि कर्मणि संग्रहो न कार्यः इति "शोधितस्यापि संग्रहः" इत्यस्यार्थ इति तस्य संग्रहो न कार्यः॥ नच गौणमुख्यन्यायेन "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः॥ शास्त्रार्थस्तेषु कर्तव्यः शब्देषु

न तदुक्तिषु" इति (अभियुक्तानाम्) उक्त्या चाहोरात्रे प्रसिद्धसमुद्रसाजात्यात्प्रवृत्तस्य समुद्रशब्दस्य "समुद्रयातुः" इत्यादावग्रह इति वाच्यम्॥आदौ सृष्टस्य समुद्रस्यागस्त्येन पीतत्वेन समुद्रस्यैवाभावात्तेनैवर्षिणा मूत्ररूपेण त्यक्तस्य तस्य समुद्रत्वाभावाच्च।प्रकृतिविकृत्योरभेदे प्रमानाभावाच्चास्य समुद्रस्य समुद्रत्वं गौणमेव न मुख्यम् ॥ नच तस्य मूत्ररूपत्वेऽत्यशुद्धत्वेन तत्र यातुरप्यत्यशुचित्वेन सेतुदर्शनेन ब्रह्महत्यादिमहापापनाशोक्तिरयुक्ता स्यादिति वाच्यम्॥ सेतोःशतयोजनविस्तीर्णस्याशेषजगद्द्रोहिरावणकृतस्वस्वधर्मानुष्टानप्रतिबन्धनाशसाधकत्वेनाशेषजगदनुष्ठीयमानस्वस्वधर्मानुष्टानजन्यपुण्यसाधकत्वेन सेतोस्समुद्राधिकरणकत्वेऽपि समुद्रत्वाभावेन तत्र स्नानदानश्राद्धादिविधानसामर्थ्यात् "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इति (याज्ञवल्क्येन २ ध्या. २१श्लो न्यायेन पञ्चगव्यस्थगोमूत्रगोमययोरिवैतद्दषिमूत्रस्य शुचित्वाभ्युपगमेन गङ्गादियावन्महापरिशुद्धनदीप्रवेशेन च शुद्धत्वाभ्युपगमात् ॥

ननु "नाप्सु मूत्रपुरीषं कुर्यात्" इति (तैत्तिरीयारण्यके) निषेधोत्र प्राप्नोतीति समुद्रयानंनिषिध्यते ॥ वसनमन्तरा स्नानकर्तृविषयत्वात् । नच "विवसनः स्नायात्" इति (त-

त्रैव ) उक्तेः पौनरुक्त्यं स्यादिति वाच्यम् । समुद्रजलेव-
तीर्यं स्नानकर्त्तृविषयकत्वात्।नच तीर्थबुद्धिव्याघातापत्तिः।
अत एव " न निष्ठीवेत् " इति ( तत्रैव ) उक्तं संगच्छते ।
अत एव स्नानपूजाविध्यादिकमुपपद्यते इति वाच्यम् ।
"तस्मात्समुद्रं नपिबन्ति" इति ( तैत्तिरीयश्रुतौ ) आ-
चमनविधिनिषेधासंगतेः। नच स्वर्गादिफलसंपादको निषे-
धविधिरिति वाच्यम् । संभवति दृष्टफलकत्वेऽदृष्टफलक-
ल्पनाया अन्याय्यत्वात् । नच पर्वकालमात्रे स्नानविधा-
नासङ्गतिरिति वाच्यम् । संभवति दृष्टफलकत्वेऽदृष्टमात्र-
फलकल्पना न न्याय्येत्यर्थस्य कल्पनात् । नचैवं दृष्टं
फलं किमपि केनापि कदाचिदपि नानुभूयत इति तदभा-
वकल्पनमेव न्याय्यमिति वाच्यम् ॥ तज्जले लवणांशस्या-
धिक्यात्तत्र विजातीयनानाऽसंख्यकृमिकीटपक्षिमत्स्यसरी-
सृपादिप्राणिसत्त्वेन निरन्तरं तत्र स्नानपानाभ्यां रक्तविका-
राद्युपद्रवोत्पत्त्यामूत्रपुरीषसम्बन्धेन तत्रत्यानां जलचरा-
णांकेषाञ्चिन्नाशापत्त्या "अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः"
इति ( छान्दोग्ये ) उक्तस्यानिषेधस्योल्लङ्घनापत्त्या च तन्नि-
षेध इति दृष्टफलसंभवात् । समुद्रप्रान्तेषु सर्वत्र लोकानां
निवासेन तैरसति प्रतिबन्धे लवणोत्पादने प्रवृत्तिरिति
सर्वत्र मूत्रपुरीषांशव्याप्तिस्स्यात्तद्वारणायैतन्निषेध इति
फलसंभवाच्च।महाजले क्वचित्तस्य दोषस्य झटिति प्रत्यक्षा

विषयत्वेऽपि स्वल्पजले तद्दोषनिग्राहकजलान्तरसम्बन्ध-बाहुल्यशून्ये झटिति दोषप्रसरस्य प्रत्यक्षत्वेन सामान्यत-स्तदारम्भाच्च। सामान्यतः सर्वजलविषये निषेधोपि मूत्रपु-रीषगतदुष्टविषांशव्याप्त्या तत्पानजन्यदोषनिराकरणाय तदारम्भाच्चेति चेत् ॥ न ॥ स्थलान्तरसंभवे जले तन्न कार्यमित्येवं वक्तव्यत्वात् । अत एव " नाच्छादितायां भूमौ नोषरे न शाद्वले नोद्याने नोदकसमीपयोर्नाकाशे " इति ( स्मृतिमुक्ताफले आह्निककाण्डे व्यासेन ) आकाशे तन्निषेधेपि विमानेन सञ्चारस्य चिरं बहुभिरनुष्ठितस्ये-तिहासपुराणादिषु वर्णनं संगच्छते । अन्यथैतन्निषेधस्य सर्वयुगेऽपि सामान्यतः प्रवृत्तेस्त्रेतादिष्वपि निषेधप्रसराच्छ्री रामेण सपरिवारेण विमानेन सञ्चारवर्णनासङ्गत्यापत्तेः । नच भगवदादिविषये नायं निषेध इति वाच्यम् । रावणा-दिब्राह्मणसंहारजन्यदोषवारणायाश्वमेधादिमहायागाद्यनु-ष्ठानेन राजादीनापि स्वकृतनियमस्य स्वेनाप्युल्लङ्घने दोष एवेत्यर्थस्य ज्ञापितत्वात् । तत्रापीष्टकादिना स्नानाद्यर्थ-मपीष्टकायोजनेन भुवं परिकल्प्य तदुपरितृणाद्यन्तर्धानेन मूत्रपुरिषोत्सर्जनयोरुपपत्तेरितिदिक् ।

ननु "श्रोत्रियश्च तटाकादिस्तृणं पर्णं तथेन्धनम्। बान्धवाः स्वकुलीनाश्च विद्याचैवोपकारिणी। न सन्ति यत्र ग्रामेतुसकु

ग्राम इति स्मृतः ॥ तत्र ग्रामे द्विजो यस्तु हव्यकव्यपराङ्मुखः। एकत्रादिवसे तिष्ठेन्महाचान्द्रायणं चरेत्" इति (स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे मरीचिना) श्रोत्रियादिशून्ये प्रदेशे एकस्मिन्दिने वासेऽपि चान्द्रायणोक्तेः प्रत्यन्तदेशगमनं न युज्यत इति तदर्थकं नौयानं समुद्रे व्यर्थमिति कलिवर्ज्यं तद्यानं निषिध्यते। कुग्रामश्च श्रोत्रियादिशून्यो ग्राम इत्यर्थः॥ न च कुग्रामवासनिमित्तचान्द्रायणप्रायश्चित्तानुमितनिषेधेनैव प्रत्यन्तदेशगमनप्रतिबन्धसिद्धौ प्रत्यन्तवासिन इति पदम् "अङ्गवङ्ग" इत्यत्र व्यर्थम्॥ "प्रत्यन्तवासिनश्चण्डालवासप्रदेशान्" इति (स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे) "प्रत्यन्तवासिनश्चण्डालप्रदेशाः" इति (दशानिर्णय्यामुत्सवानिर्णयप्रकरणे)। "प्रत्यन्तो म्लेच्छदेशः स्यात्" इति (लिङ्गानुशासने) चोक्त्या प्रत्यन्तवासिशब्दस्य चण्डालम्लेच्छोभयवाचकत्वात्। नच म्लेच्छचण्डालयोर्नभेद इति वाच्यम्॥ "चण्डालं पुल्कसं म्लेच्छम्" इति (स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे संवर्तेन) "चण्डालीं पुल्कसीं म्लेच्छीम्" इति (तत्रैव यमेन) च भेदेन निर्देशादिति वाच्यम्॥ विनिगमनाविरहात् "प्रत्यन्तवासिनः" इत्यनेनैव कुग्रामवासनिषेधे सिद्धे मरीचिवचनमेव व्यर्थमिति चेत्॥ न॥ भिन्नऋषिप्रणीतत्वेनादोष इत्युक्तोत्तरत्वात्॥

प्रायश्चित्तभेदार्थं वचनद्वयस्यावश्यकत्वाच्च । हव्यकव्य-पराङ्मुखत्वं स्यादिति हेतूक्त्या तत्र तदनुष्ठानप्रतिबन्ध-काऽरण्यादावपि निर्जने शूद्रप्राये वा गमननिषेधार्थत्वा-च्च । अन्तेऽन्ते प्रत्यन्तम् । तत्र वसनशीलाः प्रदेशाः इति व्युत्पत्त्या प्रत्यन्तवासिशब्दः प्रतिनगरप्रति-ग्रामादीनामन्ते म्लेच्छचण्डालवासयोग्ये नगरग्रामा-द्यपेक्षया बहिर्भूते समीपे प्रदेशमात्रे योगरूढः-इत्यनुभ-वाच्च । एतेन "यस्मिन्ग्रामे ब्राह्मणा न सन्ति तत्र "अव्रतः सव्रतो वापि शुना दष्टो भवेद्द्विजः । प्रणिपाताद्भवेत्पूतो विप्र-श्चक्षुर्निरीक्षितः" इति ( पराशरमाधवीये ५ ध्याया १+९ श्लो० व्या० ) शुना दष्टं प्रति विहितब्राह्मणप्रणिपातनिरीक्ष-णस्य स्थाने वृषभप्रदक्षिणं द्रष्टव्यम्" इति ( तत्रैव ) उक्ते-र्ब्राह्मणरहितेऽपि ग्रामे द्विजानां कलौ स्थितिर्युज्यत एवेत्य-पास्तम् ॥ यत्र कुत्र वा गमनसमये मध्येमार्गस्थ तथाभूत-ग्रामविषयकत्वेनैव तदुपपत्तेः ॥

नच समुद्रे नावा याने "पितृद्विट् पतितः षण्डो यश्च स्यादपपात्रतः । औरसा अपि नैतेंऽशं लभेरन्क्षेत्रजाः कुतः" इति ( नारदेन व्यवहारमयूखे ) उक्तेरपपात्रित शब्दवाच्यस्य समुद्रयायिनः स्वस्वांशहारित्वं न स्यादि-ति वाच्यम् ॥ असकृत्समुद्रयातृविषयत्वात् । अकृतप्राय-

श्चित्ताविषयत्वाच्च ॥ सर्वं वाक्यं सावधारणमिति न्यायेन पितृद्विडेव यः पतित एव यः षण्ड एव यः अपपात्रित एव यः न त्वन्यथेत्यर्थात् ।एतेन "क्लीबोथ पतितस्तज्जःपङ्गुरुन्मत्तको जडः । अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युर्निरंशकाः ॥ ४० ॥" इति (मिताक्षरायां २ ध्या ) उक्त्या पतितपदेन समुद्रयायिनो ग्रहणादंशस्तस्य नेत्यपास्तम् । अतएव "एतेषां विभागात्प्रागेव दोषप्राप्तावनंशत्वमुपपन्नं न पुनर्विभक्तस्य । विभागोत्तरकालमप्यौषधादिना दोषनिर्हरणे भागप्राप्तिरस्त्येव "विभक्तेषु सुतो जातः सवर्णायां विभागभाक्" इति ( याज्ञवल्क्येन २ ध्याये १२२श्लो०) अस्य समानन्यायत्वात्"इत्युक्तं संगच्छते॥ असकृत्समुद्रे नौयातृविषयत्वाच्च॥न चापपात्रित इत्यस्य "राजद्रोहाद्यपराधेन बन्धुभिर्घटस्फोटादिना बहिकृतः" इत्यर्थः ( व्यवहारमयूखे मदनेन ) उक्त इति वाच्यम् ॥ "व्यवसायार्थं नावादिना समुद्रमध्यद्वीपान्तरगन्तेति तु युक्तम् ॥"द्विजस्याब्धौ तु नौयातुः शोधितस्यापि ( प्य ) संग्रहः" इति कलौ संसर्गनिषेधात् । तत्रैव शङ्खलिखिताभ्याम् "अपपा(या)त्रितेरिक्थपिण्डोदकानि व्यावर्तन्ते" इति इत्युक्त्वा'अपयात्रितः'समुद्रगन्तेत्यर्थस्योक्तेश्च॥(व्यवहारकाण्डे सरस्वतीविलासेऽनंशनिरूपणावसरे तु)"अपया

त्रितः" इत्यस्य स्थाने "अपपातितः" इत्येव पाठः तस्य च "महापराधी बन्धुभिर्बहिष्कृतः" इत्यर्थश्चोक्तः । तथा (मिताक्षरायां २ ध्या १४० श्लोकव्याख्यायाम्) "अपपात्रितः" इत्यस्य स्थाने "औपपातिकः" इत्येव पठितः । एवं च यदि महापराधौपपातिकशब्दयोः समुद्रयानार्थकत्वं तदा पूर्वोक्तरीत्या दोष उद्धर्तव्यः । यद्यन्यार्थकत्वं तदा नास्माकं प्रतिकूलम् । नचाङ्गलन्यायस्थाने समुद्रयायिनोंशो देय इति निर्णीत इति वाच्यम् ॥ भारतीयत्रैवर्णिकधर्मशास्त्रानुरोधेनैतदुल्लेखादिति दिक् ॥

इत्यब्धिनौयानमीमांसायां नौयाननिर्णयाख्यं
प्रथमं खण्डं समाप्तम् ॥ १ ॥

---

## अथ स्नानसन्ध्याविचारनामकं द्वितीयं खण्डमारभ्यते ।

ननु नावा समुद्रयाने सन्ध्योपयोगिसामग्र्यभावात्सन्ध्यानुष्ठानाद्यानां नित्यानां नैमित्तिकादीनां च कर्मणां तत्र कर्तुमशक्यत्वादाचारभ्रंशः स्यात् ॥ स चायमाचारभ्रंशः पातित्यापादकः ॥ तदुक्तं ( मनुना २ ध्या. १०३ श्लो० ) "नोपतिष्ठेत यः पूर्वां नोपास्ते यश्च पश्चि-

माम् ॥ स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विज ( त्साधु ) कर्मणः ॥" इति । तथा "अग्निकार्यपरिभ्रष्टाः सन्ध्योपासनवर्जिताः ॥ वेदं च येनधीयानास्ते सर्वे वृषलाः स्मृताः" इति ( पराशरेण १२ ध्या २१ श्लो ) तथा "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ यत्किञ्चित्कुरुते कर्म न तस्य फलभाग्भवेत् ॥" इति ( मिताक्षरायां ३ ध्या २४३ श्लो० व्याख्यायां दक्षेण ) तथा "तथा द्विजातिकर्मभ्यो हानिः पतनम्" इति ( तत्रैव ) ॥ तद्विधिश्च—"अहरहस्सन्ध्यामुपासीत" इति ( आपस्तम्बादिभिः कल्पसूत्रे ) तथा "अग्नयश्चस्वाध्यायप्रवचने च" इत्यादि ( तैत्तिरीयोपनिषदि शिक्षायां ९ ) तथा "यावज्जीवमग्निहोत्रं जुहुयात्" इति ( वेदे ) च ॥ नच तत्तत्कर्मोपयुक्तयावत्सामग्रीणां तत्र नावादौ सहैवानयनेन तत्तत्कर्मणां कर्तुं शक्यत्वान्न काप्यनुपपत्तिरिति वाच्यम् ॥ सहनीतानां जलादीनां सुदूरगन्तव्यदेशावधिनिर्विकारं शुद्धतया स्थित्यसंभवात्समुद्रे जलोपलम्भेपि तस्य लवणरसाढ्यतमत्वेनानुपयुक्तत्वान्निषिद्धत्वाच्च सन्ध्यादिकर्महानिरविनाभाव्येवेत्युक्तदोषतादवस्थ्यमिति चेत् ॥ न ॥ अत्यावश्यकपानपाकार्थकजलेनैतत्कर्मणामपि सिद्धेरिति केचित् ॥ स्फुटीकरिष्यते चेदमुपरिष्टादनुपदमेव ॥

ननु स्नानानन्तरमेव सन्ध्यापाकादिकानां कर्तव्यतेति सन्ध्यावन्दनादेरेवैतादृश्यां दुरवस्थायां का कथा स्नानस्य।तदकरणे तु "स्वस्थो विप्रो यदाऽस्नात्वा भुङ्क्ते मोहपरायणः । विष्ठां तदन्नमश्नाति" इति ( विष्णुधर्मोत्तरे ) उक्तेः सर्वकर्मणामादौ विहितस्नानविध्यतिक्रमेप्रत्यवायः स्यात् ॥ न च "आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम् ॥ न दुष्यन्ति च दर्भाश्च यज्ञेषु चमसा यथा" इति। ( पराशरेण १० ध्याये ४१ ॥ श्लो ) उक्तरीत्येष्टकादिनिर्मितचतुष्कोणाकृतिके कृत्तिमेष्टकावटे सामुद्रजलं पूरयित्वा "कलौ गङ्गैव केवलम्" इति ( काशीखण्डभविष्यपुराणयोः ) तीर्थमित्यनुवर्तते ॥ " कलौ गङ्गां समाश्रयेत्" इति(विष्णुधर्मोत्तरे)सेव्यमित्यनुवर्तते॥ "भुक्तिमुक्तिफलप्रेप्सुरल्पायासेनचेन्नरः।तीर्थान्येवाश्रयेद्विद्वान्कलौ गङ्गां विशेषतः ।" इति (स्कान्दे)॥ "न भवेद्दद्मन्त्राणां संशुद्धिः शुद्धिवर्जितैः । मन्त्रैर्विना नसिध्यन्ति यज्ञाः शुद्धिस्सुदुर्लभा। काले कलेर्विशेषेण शुद्धं वस्तु न दृश्यते । कलौ युगे हि तमसा नष्टधर्मे भयङ्करे । अनेकच्छिन्नसन्तानो धर्मतन्तुर्हि जाह्नवी । विना गङ्गां धर्ममयीं कथं स्याच्च गतिः कलौ" इति ( कामिकसंहितायाम् । "कलौ कलुषचित्तानां पापद्रव्यरतात्मनाम् । विधिक्रिया-

विहीनानां गतिर्गङ्गां विना नहि" इति(भविष्ये) "भगवद्गीता किञ्चिदधीता गङ्गाजललवकणिका पीता। सकृदपि येन मुरारिसमर्चा क्रियते तस्य यमोपि न चर्चाम्" इति ( चर्पटपञ्जर्यां श्रीभगवत्पादैः ) उक्तेर्गाङ्गजलं महापापादिनाशकं तत्र किञ्चित्क्षिप्त्वा प्राश्य तथा वालुकाश्च क्षिप्त्वा जलस्य परिशुद्धतासंपादनेनादोषात् ॥ किंच लौहतन्त्रीभिर्लौहपञ्जररूपस्यजलप्रवेशनिर्गमयोग्यसरोवरस्य तत्र नावउपरितनपार्श्वे लौहतन्त्रीभित्तित्रयवतो निरावरणोपरिभागस्य स्नानार्थमन्तरारोहणावरोहणार्थकद्वित्रिसोपानकस्य नौकापार्श्वे नौकादारुरूपाभितिमतः निर्माणेन तत्र समुद्रझर्यां तत्सर्वं सुकरम् । एवं सर्वतीर्थे ॥ ततश्चैकैकनद्यां स्नानापेक्षयाधिकपुण्यलाभो महामहापातकादिनिवृत्तिश्च तन्त्रीसरोवरेपिसमुद्रस्यप्रवेशेन। ननु "अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन॥ अश्वत्थं मन्दवारे तु समुद्रंपर्वणिस्पृशेत्" इति ( निर्णयसिन्धौ ३ परिच्छेदान्त्यभारते ) तथा "समुद्रे पर्वसु स्नायादमायां च विशेषतः ॥ पापैर्विमुच्यते सर्वैरमायां स्नानमाचरन् ॥ भृगुभौमदिने स्नानं नित्यमेव विवर्जयेत्" इति ( निर्णयसिन्धौ १ मपरिच्छेदान्त्ये आश्वलायनेन ) "कदाचिदपि नैवात्र स्नानं कुर्यादप-

र्वाणि" इति ( तत्रैव प्रभासखण्डीयवचनेन ) पर्वादिव्यतिरिक्तेषु स्नाननिषेधात्तत्र स्नानादेः यत्र दिनेषु तत्संभवस्तत्र पर्वसु कर्तुशक्यत्वेप्यन्येषु कालेषु निषिद्धेषु तस्याशक्यत्वात् ॥ न च प्रत्यहं देवादिपूजासु कलशतीर्थे "सर्वे समुद्राः सरितः" "कुक्षौ तु सागरास्सर्वे" इतिसागरावाहनं न स्यात् । तत्स्पर्शस्यपर्वकालातिरिक्तकाले निषेधादिति वाच्यम् । आतिदेशिकसमुद्रत्वेनादोषात् । न च साक्षाद्यत्र संभवस्तत्रतदातदानयनसंभवोभवति न वेतिवाच्यम् । स्नानप्रयोजकस्पर्शनिषेधात् । समुद्राभिमानिदेवताया एवावाहनाच्चेति चेत् ॥ न ॥ तत्स्पर्शस्य निषिद्धत्वेपि ततः पूर्वकालेपूद्धृत्य निःक्षिप्तजलेन स्नानस्य कर्तुं शक्यवात् ॥" असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ॥ मन्त्रस्नानादितःसप्त केचिदिच्छन्तिसूरयः ॥ मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च॥वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात्। आपोहिष्ठादिभिर्मान्त्रं मृदालम्बश्च पार्थिवम् ॥ आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥ यत्तु सातपवर्षेण तद्दिव्यं स्नानमुच्यते ॥ वारुणं चावगाहस्तु मानसं विष्णुचिन्तनम् ॥ सप्तस्नानं समुद्दिष्टं मन्त्रस्नानात्क्रमेण तु॥कालाद्देशादसामर्थ्यात्सर्वं तुल्यफलं स्मृतम् ॥ मानसं प्रवरं स्नानं केचिदिच्छन्ति सूरयः ॥

आत्मतीर्थप्रशंसापि व्यासेन पठितं यतः ॥" इति (याज्ञव० स्मृ० व्या० अपरार्के १ ध्या १०० तमश्लो० योगयाज्ञवल्क्यः) तथा "शन्नआपस्तुद्रुपदादापोहि ष्ठाघमर्षणम् । एतैश्चतुर्भिर्ऋङ्मन्त्रैर्मन्त्रस्नानमुदाहृतम् ॥ अप्रायत्ये समुत्पन्ने स्नानमेव तु कारयेत् ॥ पूर्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्जनं भवेत् ॥" इति (तत्रैव) तथा—"योसौ विस्तरतः प्रोक्तः स्नानस्य विधिरुत्तमः । असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते । स्नानमन्तर्जलं चैव मार्जनाचमनं तथा ॥ जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥ अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः । स्नानाचरणमित्येतदुपादिष्टं महात्मभिः" इति (तत्रैव) तथा—"आशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कामिकम् ॥ आर्द्रेण वाससा वापि मार्जनं दैविकं विदुः ॥" इति (तत्रैव जाबालिः) चोक्तवानितिमन्त्रस्नानादेः शक्यत्वात् । (स्मृतिमुक्ताफले आचारकाण्डे दक्षेण) "आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च ॥ मानसं पार्थिवं चैव त्वष्टमं कापिलं स्मृतम् ॥" 'इति' भस्मोद्धूलनस्नानं (भस्मस्नानम्)-भस्मजाबालोपनिषदि) (वारुणम्)—जलावगाहनस्नानम् । अघमर्षणादिमन्त्रैः मार्जनं (ब्राह्मम्) (वायव्यं)—गोरजःस्नानं (दिव्यम्)—आतपयुक्तवर्षस्नानम् (मानसं)—भगवच्चरणादिध्यानं भगवद्ध्यानं ब्रह्मध्यानं वा (पार्थिवं)—

मन्त्रवन्मृत्तिकास्नानम् ( कापिलं ) विद्वदाशीर्विशेषरूपं (सारस्वताख्यम्) इति। एतत्स्नानप्रकारश्च–(पराशरमाधवीये १२ ध्याये ९ + ११ श्लो० व्या० ) " स्नानानि पञ्चपुण्यानि कीर्तितानि मनीषिभिः । आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेवच । आग्नेयं भस्मनास्नानमवगाहं तु वारुणम्॥ आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम्॥यत्तु सातपवर्षेण तत्स्नानं दिव्यमुच्यते। तत्र स्नात्वा तु गङ्गायां स्नातो भवति मानवः।" इति मूलमादाय "भुजे मूर्ध्नि तथाकाशे ऊर्ध्वाकाशेतथा भुवि॥आकाशे भुविमूर्ध्नीतिमन्त्र स्नानंविधीयते" इति "ब्राह्मं तु मार्जनंमन्त्रैः कुशैः सोदकबिन्दुभिः " इति "तच्चत्रिः कृत्वोभ्यस्तैः । विद्वत्सरस्वतीप्राप्तं स्नानं (सारस्वतं) स्मृतम्" इति ( बृहस्पतिना ) उक्तोविद्वदाशिषा संपादितंस्नानं वा (सारस्वतम्) तत्सारस्वत प्रकारश्चविस्तरेण प्रयोगानुक्रमसहितस्तत्रैव ज्ञेयः इत्युधिकांशमात्रं लिखितम्॥ न च"जलावगाहनं स्नानं वारुणं सार्ववर्णिकम् ॥ मन्त्रवत्प्रोक्षणं चापिद्विजातीनां विशिष्यते " इति ( स्मृतिमु०चा०बोधायनेन ) उक्तेर्द्विजातीनां वारुणमन्त्रस्नानयोर्विशेषतो विधानेन जलाभावे तदनुपपत्तिरिति वाच्यम ॥ " अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत्॥ब्राह्मादिरन्यथाऽशक्तौ स्नानान्याहुर्मनीषिणः"

इति ( तत्रैव व्यासेन ) " अशिरस्कं भवेत्स्नानंस्नानाशक्तौ तु कर्मिणः॥तस्याप्यसामर्थ्यविधौ मन्त्रस्नानादिकं चरेत्" इति ( तत्रैव जाबालिना ) चाशक्तविषये स्नानान्तराभ्यनुज्ञानेनादोषात् ॥ न च रोगादिना शक्तिरहित एवाशक्तपदवाच्य इति न समुद्रयायिनामशक्तत्वं युज्यत इति वाच्यम् ॥ "असामर्थ्याच्छरीरस्यकालशक्त्याद्यपेक्षया॥ मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः" इत्यादिना प्रागुक्तेः " असामर्थ्याच्छरीरस्य वैषम्याद्देशकालयोः ॥ स्नानान्येतानि तुल्यानि वारुणेन भवन्ति हि " इति (तत्रैव स्मृत्यन्तरे) उक्तेश्चदेशकालवैषम्यप्रयोज्याशक्तत्व मादाय तदुपपत्तेः ॥ किं च " भद्रपतनमार्गेषु यथा शूद्रस्तथैव सः " इति ( संवर्तेन ) "अह्निशौचन्तु यत्प्रोक्तं निश्यर्धं तत उच्यते ॥ तदर्धं तु पथि ज्ञेयमार्तः कुर्याद्यथावलम् ।" इति ( स्मृतिमुक्ताफले आह्निककाण्डे आपस्तम्बेन ) " पथिशूद्रवदाचरेत् " इति तथा " यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् ॥ तदर्धमातुरे प्रोक्तमातुरस्याधमध्वनि " इति च ( तत्रैव चतुर्विंशतिमते ) उक्तेर्बाह्याभ्यन्तराशौचेस्नानसंभवेनदोषाभावात् ॥ नच "शौचे यत्नस्सदा कार्यः शौचमूला द्विजाः स्मृताः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥ यस्य

शौचे तु शैथिल्यं सर्वं तस्य परिक्षतम् ॥ शुचीन्देवाश्च रक्षन्ति रक्षन्ति पितरः शुचिम् ॥ शुचौ बिभ्यति रक्षांसि ये चान्येदुष्टचारिणः ॥" इति ( स्मृतिमुक्ताफले आचारकाण्डे चतुर्विंशतिमते ) उक्तेः शौचन्यूनतायां दोषबाहुल्यापत्तिर्दुर्वारेति वाच्यम् ॥ पूर्वोक्तवचनैरस्यसामान्यविधेः पथ्यादिविषयातिरिक्तत्वेन संकोचनीयत्वात् ॥ अन्यथा विशेषविधेरारम्भणस्य निर्विषयत्वापत्तिरितिदिक् ॥ "शुचिर्वाप्यशुचिर्वापि काले संध्यां समाचरेत् " इति ( अभियुक्तानां ) वचनेन स्नानाभावेपि सन्ध्यायाः कर्तुं शक्यत्वाच्च ॥ ननु समुद्रादुद्धृतजलस्य नसन्ध्यायोग्यत्वम् । यतः " त्रिः प्राश्यापोद्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ॥ अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥ " इति ( याज्ञवल्क्येन १ ध्या२०श्लो० ) प्रकृतिस्थाभिरित्युक्तेरलवणैर्मधुरैरेव जलैः सन्ध्यादिविहितम्॥न च तद्ग्राह्यता याज्ञवल्क्येनाभ्यनुज्ञायताम्॥समुद्रजलग्राह्यता तु न तेन निषिद्धेति तेन सन्ध्यादिकर्तुं शक्यत एवेति वाच्यम् ॥जलेन सन्ध्यादिकार्यमित्येतावतासिद्धावुक्तविशेषणानामुपादानस्यवैयर्थ्यान्यथानुपपत्त्या लवणादिदोषान्तरयुक्तजलभिन्नजलैः सन्ध्यादिकंकार्यमित्यर्थस्यकल्पनीयत्वादिति चेत् ॥

॥न॥शुद्धजलाद्यसंम्भवे धूल्यादिभिः सन्ध्यानुष्ठानेनादोषात्॥ न च तेनाचमनादिकं कर्तुं न शक्यत इति तदसिद्धिरिति वाच्यम्॥ तेन सन्ध्यावन्दने मुख्यस्यार्घ्यप्रदानादेः करणेनापि तदकरणप्रयोज्यप्रत्यवायस्य परिहर्तुं शक्यत्वात्॥ न च धूल्यादिनार्घ्यदाने विध्यभाव इति वाच्यम्॥ "जलाभावे महामार्गे बन्धने त्वशुचावपि॥ उभयोः सन्ध्ययोः काले रजसा चार्घ्यमुक्षिपेत्" इति ( स्मृतिमुक्ताफले आह्निककाण्डे जाबालियोगयाज्ञवल्क्याभ्यां ) उक्तेः। न च धूल्यसंभवो यत्र यदा वा तत्र तदा वानुपपत्तिरिति वाच्यम्॥ तत्रापि केवलमुपस्थानाचरणेन तत्प्रयोज्यप्रत्यवायस्य परिहारसंभवात्॥ उपस्थानशब्देन गायत्र्या सूर्योपासनमिति ( याज्ञ० व्या०अपरार्के १ ध्या०। नच तत्र विध्यभाव इतिवाच्यम्॥ "देशक्षोभे महापत्तौ मार्जनार्घ्याद्यसंभवे॥सन्ध्यागतं सहस्रांशुं मन्त्रैः कुर्यादुपस्थितम्॥" इति ( तत्रैव व्यासेन ) उक्तेः॥ न चसत्यापिशास्त्रे आचाराभाव इति वाच्यम्॥ साङ्गसन्ध्यानुष्ठानासमर्थैर्युद्धोद्यतैर्वेदशास्त्रपारावारपारदर्शिभिर्युधिष्ठिराद्यैः सर्वमङ्गंपरित्यज्य मुख्यमुपस्थानमात्रमनुष्ठितमिति ( महाभारते )—" तथैव चमहाराज दर्शितारणमूर्धनि॥ सन्ध्यागतं सहस्रांशु-

मादित्यमुपतस्थिरे " इति भगवता व्यासेनोक्तेः ।

किं च व्रतान्तरेष्विव प्रत्यन्तदेशं प्रति गन्त्रा इतो निर्गमनदिनादारभ्य यावत्प्रत्यागमनं किञ्चित्तदधिकं वा सन्धादिकर्मणामितरसंभावितनित्यनैमित्तिककर्माकरणप्रयोज्यपापनिवर्तकप्रायश्चित्तकर्मणामप्यनुष्ठानाय कश्चित्प्रतिनिधिः कल्प्यताम् ॥ एवं विद्याशिल्पयन्त्रकलादिज्ञानं निस्संशयं संपादयितुं शक्यते न तु तत्र गमनाभावे। यदि तदनावश्यकता तर्हि किं तत्र गमनेन ॥ न च प्रतिनिधिकल्पने मानाभाव इति वाच्यम् ॥ "जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् ॥ विप्रैःसंपादितं यस्य संपन्नं तस्य तत्फलम्" इति ( निर्णयसिन्धौ १ मपरिच्छेदे मरीचिना ) उक्तेः । अत एव "विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः ॥ आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ॥ २९ ॥ प्रभुः प्रथमकल्पस्य योनुकल्पेन वर्तते ॥ न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ ३० ॥ " इति ( मनुस्मृ० ११ ध्या ) उक्तं संगच्छते । ( सांरायिकम् ) प्रत्यवायपरिहारकम् । एतत्कर्माचरणेन मुक्तपापाःसन्तो दीर्घायुष्यं लभन्ते इत्यर्थः ॥

न च प्रायश्चित्तं पापकर्तुरेवनान्यस्य प्रतिनिधेः । यथा राजस्थाने शिक्षाऽपराधिन एव न तु प्रतिनिधेरितिवादिति

वाच्यम्॥पुत्रेण पितर्यशक्तेमृते वा प्रतिनिधितया सर्वप्रायश्चित्तादेरनुष्ठानात् ॥ किं च वैशम्पायनकृतब्रह्महत्यानिवारणाय तच्छिष्यैः प्रायश्चित्तानुष्ठानाच्च॥यथा"चक्रुश्च समयं सर्वे महामेरुनिवासिनः ॥ ऋषयोद्यमहामेरौ समाजेनागमिष्यति ॥ तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ॥ वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्तदा॥ यजूंष्यधीयतां तेषां मुनीनां तु गुरोर्मुखात्॥स्वस्रीयं बालकं सोथ गुरुशिष्यान्तरालके । वारयामास तं बालं कुशैः सन्ताडयन्पदे ॥ तदाध्ययनविघ्नं नो मा भूदिति विशङ्कितः ॥ कुशस्य ताडनादेव बालः पञ्चत्वमागतः ॥ ब्रह्महत्यामनुप्राप्य सोचिन्तयदतिक्रमम् ॥ गुरुरुवाच ॥ याज्ञवल्क्यः सहाध्यायी तदन्ये द्विजपुङ्गवाः ॥ करिष्यन्ति च मद्वाक्याद्धत्याव्रतमिदं द्विजाः ॥" इत्याद्युक्त्वा "ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तुतैः ॥ चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तमाः ॥" इत्यादिना ( स्कान्दे महापुराणे सनत्कुमारसंहितायां कालिकाखण्डे १७ ध्या) तथा " वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् ॥ यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥ " इति ( श्रीभागवते १२ स्कन्धे ६ ध्याये ) तथा "ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु तैः । चरकाध्वर्यवस्ते

तु चरणान्मुनिसत्तम ॥ १३ ॥" इति ( विष्णुपु० ३ यांशे ८मेध्याये ) इत्यलंबहुना ॥

ननु "स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात्" ( जैमिनिदर्शने ६ । ३ । २१ । अधि० ७ ) इति सूत्रेण जीवति फलसम्बन्धात्कर्मप्रेरकत्वाच्च स्वामिनः प्रतिनिधिर्नास्तीत्यर्थकेन अन्यस्मिन्नपचारिते यजमानः प्रतिनिधिं गृह्णाति यजमानेऽपचारिते कः प्रतिनिधिं गृह्णीयात् । को वाध्वर्युप्रभृतीन्प्रेरयेदिति न मृते यजमानकार्यस्य फलित्वस्यान्यस्मिन्नयोगात्संभवे वा तस्यैव स्वामित्वेन प्रतिनिधित्वाभावान्न जीवत्यापि प्रतिनिधिरित्यर्थकेन निर्णीतमिति चेत् ॥ न ॥ " बहूनां तु प्रवृत्तेन्यमागमयेदवैगुण्यात् " इति ( जैमिनिदर्शने ६ । ३ । २२ । सत्र-

---

( १ )-( स्कान्दे सनत्कुमारसंहितायां गौरीखण्डे तु ) "याज्ञवल्क्याय मुनये गोसहस्रं च दत्तवान् ॥ जनकः क्षत्रियवरः सर्वशास्त्रविशारदः । तदोत्थाय सभामध्ये वैशम्पायनमब्रवीत् ॥ वैशम्पायन उवाच॥ याज्ञवल्क्य वरः कस्त्वं विद्यमाने गुरौ मयि। अनुज्ञाव्यातिरेकेण गृहीतं गोसहस्रकम् ॥ मत्तोधीतं वेदजालं देहि गच्छ सभास्थलात् ॥ तथेति याज्ञवल्क्येन वमितं वेदजालकम् ।" इति । तथा "चरकाध्वर्यवादींस्तु व्यासो वीक्ष्य महस्य च ॥ कमण्डलुस्थोदकेन विरूपांस्तांश्चकारह जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते स्मृताः ॥" इति ( विष्णुधर्मोत्तरे विष्णुरहस्योपपुराणेच ) ब्रह्महत्यादिकथा नोच्यते ।

न्यायाधि० ८) इति सूत्रेण फलभोक्तृत्वं यागकर्तृत्वं चेति सत्रिणां कार्यं द्विविधम्। तत्र प्रतिनिधिर्द्वितीयमात्राश्रयो नाद्याश्रयः ऋत्विक्कार्ये कर्तृत्वे प्रतिनिधिमन्तरेण सप्तद श्याभावात्षोडशैव कर्माणि निष्पद्येरन्। नावशिष्टमेकम्। तस्माद्यजमानस्य प्रतिनिध्यभावेप्यृत्विजः प्रतिनिधिसद्भावात्पुरुषान्तरं प्रतिनिधापयितव्यमित्यर्थेकेन क्वचित्प्रतिनिधिर्भवतीत्यदोषात्।नचैवं तस्य स्थानेन प्रतिपादितत्वादृत्विक्प्रतिनिधित्वेपि यजमानप्रतिनिधित्वं न संभवतीति वाच्यम् ॥ "सस्वामीस्थानसंयोगात् ॥ २३ ॥ कर्मकरो वाभूतत्वात् ॥ २४ ॥ तस्मिंश्च फलदर्शनात् ॥ २५ ॥" (जैमिनिदर्शने ६। ३। ९ धिक०) इति सूत्रैरारम्भसमाप्तिपर्यन्तमनुतिष्ठतः फलं युक्तम्।प्रतिनिधिस्तु नारब्धवान्। ततश्च फलाभावाद्यजमानत्वं न यजमानकर्तव्यक्रियाकर्तृत्वं त्वस्त्येव। मृतस्य समाप्त्यभावे फलं श्रूयत इति नानुपपत्तिरित्येवमर्थैकैर्यजमानत्वाभावेपियजमानकार्यकर्तृत्वोक्तेरदोषादितिदिक्।एतेन"भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च। यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः" इति (निर्णयसिन्धौ १ परिच्छेदेप्रभासखण्डे) "स्वयं कर्तुमशक्तश्चेत्कारयीत पुरोधसा।" इति (अत्रैव वायवीये) उक्तेर्धर्मकार्येषु प्रतिनिधिर्नान्यत्रेति परास्तम् ॥ धर्मशब्देन

सर्वेषां नित्यानां नैमित्तिकानां काम्यानां प्रतिषिद्धाचरण-निमित्तकप्रायश्चित्तानामपिग्रहणस्य सर्वैरपिधर्मशास्त्र कृद्भिः स्वीकारात्॥अतएवैतत्प्रतिपादकशास्त्रस्य सर्वस्य धर्मशास्त्रमिति नामापि स्वरसतयोपपद्यते। तेननानापदि प्रतिनिधिकल्पनं युज्यते। "आपत्कल्पेन योऽधर्मं कुरुतेऽनापदि द्विजः। समाप्नोति फलं तस्य परत्रेति विचारितम्" इति (मनुस्मृतौ ११ ध्याये २८ श्लो.) अनापदि प्रतिनिधिकल्पनाया निष्फलत्वोक्तेः॥

अथ कदाचित्सर्वथापि कर्तुमशक्यत्वेन सन्ध्याया अतिक्रमे का गतिरिति चेत्॥ शृणु॥ "यथा तोयबलो वह्निर्दहत्यपि च बलवजान्॥ एवं दहति वेदज्ञः कर्मदोषं स्वमात्मनः। अकामतः कृतं पापं वेदाभ्यासेन शुध्यति। कामतस्तु कृतं पापं प्रायश्चित्तैः पृथक्पृथक्।" इति (संवर्तेन) उक्तेरकामकृतस्य वेदाभ्यासेन कामकृतस्य प्रायश्चित्तेन प्रतिपदोक्तेन तदलाभे तदसंभवेच सामान्येन सन्ध्यातिक्रमजन्यपापस्य नाशसिद्धेः। तच्च प्रायश्चित्तं (प्रायश्चित्तहेमाद्रौ पराशरः) आह। "सन्ध्यादिनित्यकर्माणि परित्यज्य यदा वसेत्। शाक्तेयादिषु मन्त्रेषु जप्यं चैवाघमर्षणम्॥ अकार्यकर्मकर्तुश्च महापूर्णादिभोजनम्।सर्वपापविशुद्ध्यर्थमघमर्षणमीरितम्" इति।अघ-

मर्षणकृच्छ्रस्वरूपमाह ( स्मृतिमुक्ताफले शङ्खः )— "त्र्यहं त्रिषवणस्नायी मौनी स्नात्वाघमर्षणम्। मनसा त्रिः पठेदप्सु न भुञ्जीत दिनत्रयम्। अघमर्षणमित्येतद्व्रतं सर्वाघसूदनम्।" इति॥—॥ ( स्मृतिमुक्ताफले आह्निककाण्डे शङ्खस्तु ) "सन्ध्यादिकर्मलोपे तु प्रायश्चित्त- ( दिनमेक ) मभोजनम्। दिनद्वये त्रिरात्रं स्यात्कृच्छ्रार्धं तु दिनत्रये। दशाहे कृच्छ्रमेकं स्यादूर्ध्वं चान्द्रायणं भवेत्। चान्द्रायणं पराकं च मासादूर्ध्वं विधीयते। ततोऽप्येवं प्रकल्प्यं स्याद्व्यासस्य वचनं तथा।" इत्याह॥ नचैवं बहुभिर्दिनैः प्राप्यं देशं प्रति समुद्रयाने क्रियमाणे बहूनां सन्ध्यानां लोपः प्राप्नोतीति तदनुसारेण प्रायश्चित्तेऽनुष्ठीयमाने बहव उपवासाः कर्तव्याः प्राप्यन्ते। ते च शरीररक्षणविरोधिनः। शरीररक्षणविरुद्धं कार्यं न कार्यम्। "सर्वमन्यत्परित्यज्य शरीरमनुपालयेत्। तद्भावे सति भावानां सर्वभावः शरीरिणाम्।" इति ( चरके निदानस्थाने ६ ध्या० ) उक्तेः। न चेदं न धर्मशास्त्रं किन्त्वर्थशास्त्रम्। तच्च धर्मशास्त्रसमभिव्याहारे दुर्बलम्। तदाह ( याज्ञवल्क्यः २ ध्या २१ श्लोकेन ) "अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः" इति। यथा "जिघांसन्तं जिघांसीयान्नतेन ब्रह्महा भवेत्" इत्यर्थशास्त्रम्।

"न हिंस्यात्सर्वा भूतानि" इति धर्मशास्त्रमिति वाच्यम्॥ "क्षात्रेणात्मानं परिधापयाथ ॥ ५१ ॥" इति (अथर्व० का० १२ अनु ३ वर्ग १८) तथा "आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि। आत्मानं सततं रक्षेद्दारैरपि धनैरपि" इति (मनु० ७ ध्या० २१३ श्लो) चात्मरक्षाया वेदशास्त्राभ्यां विधानात्॥ न चैते धनार्जनविधायके भवतो न सामान्यतः शरीररक्षार्थिके इति वाच्यम्॥ "देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि। रक्षेदेव स्वदेहानि पश्चाद्धर्मं समाश्रयेत्॥ ३६॥ येन केन च धर्मेण मृदुना दारुणेन वा। उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्॥३७॥ आपत्काले समुत्तीर्णे शौचाचारं तु चिन्तयेत्॥ शुद्धिं समुद्धरेत्पश्चात्स्वस्थो धर्मं समाचरेत्॥३८॥" इति (पराशरेण ७ध्या३६श्लो०) तथा "क्षात्रेण कर्मणा जीवेद्विशां वा ह्यापदि द्विजः। निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्सुधीः" इति (पराशरमाधवीये याज्ञवल्क्येन) उक्तेश्चास्माकमापदामगणनीयत्वेन तत उद्धारश्च महाराजाश्रयमन्तरेण न भवति। श्रीमन्महाराजाधिराजादिविरुदावलीविराजमानराजसहस्रजेगीयमानानिरुपमयशोनिकुरुम्बपरिशोभितजगद्रक्षाधुरीणागणनीयसुगुणगम्भीरान्तरङ्गपरिपूर्णकृपाम्बुधितरङ्गो-

---

(१) (क्षात्रं) धनमित्यर्थः।

त्पतच्छीकरलवानन्दितजगन्मण्डलेन दीनभारतीयजनदै-
न्यदारिद्र्याद्यन्धकारगिरिवरनिर्मूलनबद्धादरोदयगिरिवरिष्ठ
सिंहासनसमारूढापरसहस्रांशोः श्रीमदेडवर्डप्रभुवरिष्ठस्य
स्वराज्यसंस्थापित चतुःषष्ट्यतीत नानाकलाशिल्पविनोद
व्यायामयन्त्रादिविविधविद्याविस्तृतस्वीयमुख्यराज्यक्षीरा-
म्बुधेः स्वस्वकर्माख्यपात्रद्वारा तदीयामृतमुपलभ्यापाद्विष-
लहरीभ्यो मुक्तिरेवेदानीं प्रथमंपरमो धर्मस्ततोन्य आमुष्मि-
को धर्मोनुष्ठेय इत्युद्धारक्रमः।शास्त्रलोकव्यवहारयोः"अष्टा
भिर्लोकपालानां मात्राभिर्निर्मितो नृपः" इति ("नावि-
ष्णुः पृथिवीपतिः" इति "यद्यद्विभूतिमत्सत्त्वं श्रीम-
दूर्जितमेववा। तत्तदेवावगच्छत्वं मम तेजोंशसंभवम्" इति
(भगवद्गीतायां० ) चोक्तेरिह लोके राजैवेश्वरो यतो-
यमष्टादिक्पालांशसमाष्टिर्विष्णवंशश्च, अमुष्मिस्तु तद्भिन्नः
"सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥ सर्वस्य प्रभु-
मीशानं सर्वस्य शरणं सुहृत्" इति(श्वेताश्वतरोपनिषदि)
सर्वसुहृत्सर्वप्रभुस्सर्वैरपि शरणीकर्त्तव्य इत्येवं मूलं परि-
चिन्त्य तदीयसामीप्यलाभेन सर्वास्सम्पदस्सुखेनोपलब्धुं
"शरीरमाद्यं खलु धर्मसाधनम्" इति शरीररक्षणे विरोधिनो
दूरीकृत्यच तत्सम्यग्रक्षमाणः इतरान्स्वस्वधर्मान्संपादयेदि-
तिमुख्यत्वेनोक्तेस्सन्ध्यादिनित्यकर्मानुष्ठानं क्वचित्कालं नि

रोद्धव्यं भवतीति चेत् ॥ न ॥ "अशक्याङ्गपरित्यागेन प्रधानं कर्तव्यम् । तावतैव शास्त्रवशात्फलसिद्धिः" इत्युक्त्वा "यथा कथञ्चिन्नित्यानि शक्त्यवस्थानुरूपतः । येन केनापि कार्याणि नैव नित्यानि लोपयत्" इति (बोधायनः) इति "शक्तितारतम्यकृतमनुष्ठानवैषम्यं नृणाम्" इति (परा०मा-ध०१ध्या.२२ श्लो०व्या०) उक्तेर्मनसोपस्थानमात्रानुष्ठान-स्याश्रयणेनादोष इति प्रागेव समाहितत्वात् । "संघे शक्तिः कलौ युगे" इति सर्वैरप्येकीभूयोपस्थितभारतीया-पत्परंपराभ्यस्समुद्धरणादृते सर्वतो निरर्गलं प्रसृताधर्म-विषलहरी न शुष्यति धर्मामृतझरीशोषमपास्य न वर्द्धत चेति तदुपायभूतागणनीयशिल्पविद्यापरीक्षाप्रयो-गनिपुणानां कोटचवधिकानां तत्तदाचार्याणां परिनिष्ठित-निरर्गलप्रज्ञानां प्रसरणसमसमयेसमुन्मिषितभारतीयचा-तुर्वर्ण्यमहाभाग्यलक्ष्मीकटाक्षामृतपरिवाहावगाहनंपरिधूनि तवञ्चनाद्रोहदौर्मनस्यकामक्रोधमदमात्सर्यासूयाद्वेषदम्भा-नृताशाद्यधर्मपिशाचान्मोचनं विश्रान्तिचोपलभ्य धर्म-स्वरूपं साक्षात्कर्तुं शक्नुवन्तीति विचिन्त्य तादृशं श्रीमद्विक्टोरियाचक्रवर्तिनीश्रीमद्गणनीयगुण-बिरुदावलीविराजितश्रीमदेड्वर्ड्धर्मराज्यसमयमुपलभ्य तदुपायसम्पादनसमये बोधायनोक्तरीत्या यथाशक्तिनि-

त्यकर्मानुतिष्ठन्तो गमनसमये उचितसामग्र्यलाभेन मनसाकृत्वा यथाशक्ति गोशुश्रूषणग्रासदानेन तद्दोषं परिहृत्यागमनोत्तरं कालदेशयोग्यप्रायश्चित्तमनुष्ठाय क्रमेण स्वविद्याप्रयोगादिकं कुर्वन्तः यथावत्संध्याः कर्तुं शक्नुवन्तीत्यदोषात् । न च राज्ञः सकाशादेतल्लाभो वर्णितः । कथमेतल्लाभस्तस्मादिति वाच्यम् ॥ तेन महाराजेन विद्याशिल्पादिविदां कोट्यवधिकानांस्वराज्ये संस्थापनेन परिपोषणेन तेभ्यस्सर्वेषामन्येषां वा तदीयसर्वविद्याशिल्पाद्यवगमायापरिमितोपायकल्पनया च तन्मूलकता तल्लाभस्येत्यस्य निर्विवादत्वात् । न च "सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे " इति ( स्मृतिमुक्ताफले महाभारते ) उक्ते । न चारम्भे सर्वथा कथञ्चिदपि सन्ध्याया अननुष्ठाने का गतिरितिप्रश्नेइदं समाधानमनुत्तरमिति वाच्यम्। "नियतिः कारणं लोके नियतिः कर्मसाधनम्।नियतिः सर्वभूतानां नियोगेष्विह कारणम्।न कर्ता कस्यचित्कश्चिन्नियोगेनापि चेश्वरः । स्वभावे वर्तते लोकस्तस्य कालःपरायणम् । न कालः कालमत्येति न कालः परिहीयते। स्वभावं च समासाद्य न किञ्चिदतिवर्तते। किन्तु कालपरीणामो द्रष्टव्यः साधु पश्यता । धर्मश्चार्थश्च कामश्च कालत्रयसमाहिताः" इति ( वाल्मीकिरामायणे किष्किन्धाकाण्डे २५ सर्गे ) । ( व्याख्या )—"कालस्य

मुख्यत्वं दर्शयति । नियतिः नियम्यतेऽनयेति ( नियतिः ) कालकृता व्यवस्था निमेषादिपरार्द्धान्ता । कालस्त्वीश्वर एव ( लोके ) लोकसृष्ट्यादिव्यवहारे ( कर्मणः ) लौकिकालौकिककर्मप्रवृत्तेः दिनादिरूपेण कारणं काल एव ( सर्वभूतानां ) नियोगाधिकृतप्राणिमात्रस्य ( नियोगेषु ) ज्योतिष्टोमादिषु ( नियतिः ) वसन्तादिः कारणम् ॥–॥ कालातिरिक्तं न साक्षात्प्रवर्तकमिति निर्दिशति । न कर्तेति "कालः पचति भूतानि कालः संहरते तथा । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः" इति ( चाणक्यनीतौ ) "कालात्मा भगवानेव सर्वकर्मप्रवर्तकः" इति चान्यत्र॥ स्पष्टोर्थः शिष्टानाम् । तथा–"भवत्यधर्मो धर्मो हि धर्माधर्मावुभावपि । कारणाद्देशकालस्य देशकालस्स तादृशः ।" इति ( महाभारते शान्तिपर्वणि ७८ ध्या. ) तथा "व्योमैकान्तविहारिणोपि विहगाः संप्राप्नुवन्त्यापदं बध्यन्ते निपुणैरगाधसलिलान्मीनास्समुद्रादपि । दुर्नीतोर्हि किमस्ति किं सुचरितं कः स्थानलाभे गुणः कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि" इति क्वचित् ( नीतिविद्भिः ) "राजा कालवशं गतः" इति ( रामायणादौ ) "देवाधीनं जगत्सर्वं मन्त्राधीनं तु देवतम् । तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणा मम देवताः" इति

( अन्यत्रापि ) "युगरूपा हि ते द्विजाः" इति "अन्ये कृतयुगे नृणां त्रेतायां द्वापरे युगे । अन्ये कलियुगे नृणां युगरूपानुसारतः" इति च ( पराशरेण १ ध्या. २१ श्लोके ) एवंचकाल एव सर्वस्यापि कारणम् । कालश्च परमेश्वर एवेति तस्यानुसर्तव्यत्वादितिकेचित् । राजधनिकादिकाश्रयणमैहिकसुखकारणमिति राजैवहेतुः॥ "राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते । प्रजा राजभयादेव न खादन्ति परस्परम् । कालो वा कारणं राज्ञो राजा वा कालकारणम् । इति ते संशयो मा भूद्राजा कालस्य कारणम् । राज्ञा हि पूजितो धर्मस्ततस्सर्वत्र पूज्यते । यद्यदाचरते राजा तत्प्रजानां हि रोचते" इत्यादि ( महाभारते शान्तिपर्वणि ६८–६९–७६ अध्यायेषु ) "कामवृत्तस्त्वयं लोकः कृत्स्नः समुपवर्तते । यद्वृत्ता स्सन्तिराजानस्तद्वृत्तास्सन्ति हि प्रजाः" इति ( वाल्मीकीयेरामा० योध्या० स० १०९ श्लो ९ ) "यद्यदाचरति श्रेष्ठस्तत्तदेवेतर जनाः । स यत्प्रमाणं कुरुते लोकस्तम ( द ) नुवर्तते" इति ( भगवद्गीता ३ ध्या. २१ श्लो. ) "राज्ञि धर्मिणिधर्मिष्ठाः पापे पापाःसमेसमाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः" इति(नीतिज्ञैः) "यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुष-

कारण विना दैवं न सिध्यति " इति ( याज्ञवल्क्येन १ ध्या. ३५१ श्लो. ) उक्तेश्च राजैव सर्वस्य कारणमित्यर्थस्य निरूपितत्वात्सतस्तस्या दाश्रयणानन्तरमैहिकानिष्टपरिहारे सति पारलौकिकानिष्टपरिहाराय यतितव्यमिति सिद्धम् । पूर्वमन्याय प्रवृत्तै राजपाशैर्म्लेच्छैर्भारतीयाः शूरा राजानोन्ये च द्रोहवञ्चनादिभिरुपायैर्निर्जिता हताश्छिन्ना भिन्ना दासी कृता देशान्तरं नीताश्च । कोट्यधिकानां ग्रन्थानां पुस्तकानि स्वस्नानजलोष्णीकरणाय प्रत्यहमुपयुक्तानि । अवशिष्टानीदानीं परिदृश्यमानानि तत्सहस्रांशभूतानि । तेषां यज्ञोपवीतानि त्रैवर्णिकानां कण्ठेभ्य उत्पाटच प्रत्यहं स्वपाकायोपयुक्तानि स्त्रियश्चोपभुक्ता गृहीता नीता दासीकृता उद्वा मारिताश्छिन्ना भिन्ना देशान्तरं नीता म्लेच्छीकृताश्च । एवं त्रैवर्ण्यं बहुधा नष्टं नीतं दासीकृतमपेयपानाभक्ष्यभक्षणादिभिर्भ्रंशितं च गृहाणि प्रासादाः कुटीराणि मठाः धर्मशाला देवालया दग्धानि छिन्नानि भिन्नानि निर्मूलितानि भस्मीकृतानि दुर्गाणि विनाशितानि ॥ किं बहुना ॥ अग्निहोत्रादि श्रौतस्मार्तव्यवहारा अध्ययनाध्यापनप्रक्रिया वर्णाश्रमधर्माश्च समूलमुन्मूलिताः तद्देवालयाः ( मस्जी ) अस्मद्देवालयस्थानेषु परिकल्पिताः सर्वेभ्यो राजधानीदेवालयादिभ्यः सर्वस्वमपहृतम् । एवं

महाप्रलयकालपीडया चिरं चतुःपञ्चशतीवर्षेषु भारतीयाःप्रजा असकृत्पीडिताः बीजरूपेण त्रैवर्णिका गुप्तवेषधरा आसन् । ततश्चिरात्तत्प्रलयान्ते आङ्गलप्रभुवर्योदयमुपलभ्य बहुशतीकाले व्यतीतेपि स्वीयधर्माधर्मकृत्याकृत्यनिर्णये सन्दिह्यन्तः स्वस्वोढस्त्रीष्वपि पत्नीत्वे विचारपरास्तत्तन्निर्णयार्थपुस्तकान्वेषणमावश्यकमितिनिश्चित्य तदन्वेषणायप्रयतमाना अद्यावधि नामान्येव यथालाभं संगृह्य " गृहे गृहे पुस्तकभारभारम् " इति यथालाभं संग्रहण एव कालं क्षिपन्तः पुत्रादीनां दुर्व्यवहारादिकं सम्मानयन्तः प्रायःस्वयमपेयपानाभक्ष्यभक्षणादविरताःपूर्वकालिकम्लेच्छवात्याचंक्रमणभ्रमविमुक्ता अपि तद्भ्रान्तिमपरित्यजन्त एवाद्यापितिष्ठन्तीति ततो मुक्तत्वस्फुटीकरणेन यथावत्स्वस्ववर्णाश्रमाचारप्राप्तश्रौतस्मार्तधर्मकर्मादिपरिनिष्ठासम्पत्तयेसाधनानि झडिति संगृहीतव्यानिनोपेक्षणीयानि॥ननु काल एव कारणमित्यादेःका गतिरिति चेत् ॥ शृणु॥स कालोपि राजवत्प्रबलं प्रायोऽस्वतन्त्रं क्वचित्स्वतन्त्रं च कारणमित्यव गम्यतामिति ॥ ननु " सन्ध्यामापादिनो पूर्वां नोपास्ते यश्च पश्चिमाम् । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः" इति ( स्मृति० ) आपद्यपि सन्ध्या नैव परित्याज्येति वाच्यम् ॥ प्रायश्चित्तविधेर्वैयर्थ्यापत्तेः ॥

स्वस्थावस्थावद्विषयकत्वाच्च । तदाह ( परा-माध. १ ध्या. अत्रिः )-"नोपतिष्ठन्ति ये सन्ध्यां स्वस्थावस्थासु वै द्विजाः । हिंसन्ति हि सदा देवं भगवन्तं दिवाकरम्" इति दिक् ॥

एवमेव समुद्रयानेनाग्निहोत्रादिलोपेऽपि प्रायश्चित्तं "द्वादशाहातिक्रमे त्र्यहमुपवासो मासातिक्रमे द्वादशाहमुपवासः संवत्सरातिक्रमे मासोपवासः पयोभक्षणं च" इति ( २८९ श्लो. व्या. मिताक्षरायां३ध्या. भरद्वाजेन )"संवत्सरोत्सन्नेग्निहोत्रे चान्द्रायणं कृत्वा पुनरादध्यात् । द्विवर्षोत्सन्ने चान्द्रायणं सोमायनं च कुर्यात् । त्रिवर्षोत्सन्ने संवत्सरं कृच्छ्रमभ्यस्य पुनरादध्यात्" इति ( तत्रैव हारीतेन ) "अग्न्युत्सादी संवत्सरं प्राजापत्यं चरेद्गां च दद्यात्" इति ( तत्रैवशङ्खेन ) "प्राणायामशतमात्रिरात्रादुपवासः स्यादाविंशतिरात्रात् । तत ऊर्ध्वमाषाष्टिरात्रात्तिस्रो रात्रीरुपवसेत् । तत ऊर्ध्वमासंवत्सरात्प्राजापत्यं चरेत् अतऊर्ध्वं कालबहुत्वे दोषबहुत्वम्" इति (तत्रैव भरद्वाजेन) "योनपाविध्येत्स कृच्छ्रं द्वादशरात्रं चरित्वा पुनराधेयं कारयेत्" इति ( तत्रैव वसिष्ठेन ) "योग्निं त्यजेत नास्तिक्यात्प्राजापत्यं चरेद्द्विजः" इति ( तत्रैव व्याघ्रेण ) चोक्तप्रायश्चित्तेषु स्वस्वाग्निहोत्रलोपदिनसंख्यादिकमनुसृत्य प्रायश्चित्तस्यान्यतमस्याचर-

---

( १ ) हिंसागत्यर्थौ द्वावत्र विवक्षितौ ।

णीयत्वात् ॥ एतेन "औपासनपरित्यागी सुरापीत्युच्यते बुधैः" इति ( हेमाद्रौ प्रायश्चित्त खण्डे देवलेन)उक्तरीत्या सुरापित्वातिदेशश्च स्यादिति परास्तम् । बोधायनादिभिः कल्पसूत्रेष्वौपासनस्य षण्मासेषुद्वादशाहत्यागे षाण्मासिकद्वादशाहप्रायश्चित्तविधानेन तस्याकृतप्रायश्चित्तविषयत्वात् ॥ प्रतिनिधिद्वारा तस्य तस्यानुष्ठानाच्च ॥ ऋङ्मात्राध्ययनेन वा ब्रह्मयज्ञसिद्धिश्चेत्यादिकमूह्यमिति बोध्यम् ॥

न च नौकया समुद्रयाने "शौचे यत्नः सदा कार्यः शौचमूला द्विजाः स्मृताः । शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः । यस्य शौचे तु शैथिल्यं वृत्तं चैव परिक्षितम्।शुचीन्देवाश्च रक्षन्ति रक्षन्ति पितरःशुचिम्। शुचेर्बिभ्यति रक्षांसि ये चान्ये दुष्टचारिणः" इति (स्मृतिमुक्ताफले आह्निककाण्डे)उक्तरीत्या क्रियासाफल्यसंपादकं वृत्तपरीक्षणसंपादकं च शुचित्वं भुवीव कर्तुमशक्यम् ॥ सामग्र्यास्तत्र न्यूनत्वादिति वाच्यम्॥देशं कालं तथा मानं द्रव्यं द्रव्यप्रयोजनम्।उपपत्तिमवस्थांच ज्ञात्वा शौचं प्रकल्पयेत" इति (तत्रैव बोधायनेन) उक्तरीत्या शौचसंकोचेसंपादनीये"आह्नि शौचं तु यत्प्रोक्तं निश्यर्धंततउच्यते। पथि पादं तु विज्ञेयमार्तः कुर्याद्यथाबलम्" इति ( तत्रैवा-

पस्तम्बेन) उक्तरीत्या नौकापथस्थस्य भूपथस्थस्यैववा न्यायसाम्याद्व्यवस्थास्वीकारेण दोषाभावात्।एतेनेदं प्रायश्चित्तविषयम्। देशं कालं वयःशक्ति पापं चावेक्ष्य यत्नतः प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः" इति (याज्ञवल्क्येन ३ ये ध्याये २९४श्लोके) उक्त एव प्रायश्चित्तादिसंकोचो बोधायनेनाप्युक्त इत्यभ्युपगमादिति परास्तम्॥ याज्ञवल्क्यवचनं प्रायश्चित्तप्रकरणस्थं बोधायनोक्तं त्वाह्निकप्रकरणस्थमितिभेदस्य स्पष्टत्वात्॥ अविरोधेनोभयाविषयकत्वेपि बाधकाभावाच्च॥ अयमर्थः "संकटे विषमस्थाने दुर्गे तु परिखे तथा॥ भद्रपत्तनमार्गेषु यथा शुद्धस्तथैव सः" इति (संवर्तेन स्मृतिरत्नाकरे) उक्तः। अयमेवार्थः (मनुनापि) "पथि शूद्रवदाचरेत्" इत्युक्तोनत्वपूर्वधर्माचरणार्थउक्तः॥

ननु नौकायां यावत्सामग्रीणां सह नयने तत्र नियमेन नानापदार्थानां निष्पादनायाऽभीक्ष्णमुलूखलादिशब्दानामविच्छेदात्तावत्कालं भोजनं न स्यात्। किं च कप्याप्यसत्त्वेपि नौकानेतृधूमयन्त्रशब्दस्य शूद्रचण्डालपतितोदक्यान्यतमसँल्लापस्य च श्रूयमाणत्वात्तदाभोजनं न स्यात्। "तैलयन्त्रेक्षुयन्त्रादेः शब्दो यावत्प्रवर्तते तावत्कालं न भोक्तव्यं शूद्रान्त्यपतितस्य च॥ काहलभ्रमणग्रावणां मुसलोलूखलस्य च॥ एतेषां निनदो यावत्तावत्काल-

मभोजनम् । चण्डालपतितोदक्यावाक्यं यावद्द्विजोत्तम । भुक्त्वा तु ग्रासमात्रेण दिनमेकमभोजनम् ” इति ( स्मृतिरत्नाकरे सनत्कुमारेण) तदा भोजननिषेधादिति चेत् ॥ ॥ न ॥ शक्तैस्तन्निरोधस्यकर्तुं शक्यत्वेनादोषात्। अशक्तैर्मध्यमैर्वातन्निरोधसमये भोक्तव्यत्वात् । तथा लोके व्यवहारादर्शनाच्चनिषेधवचनस्य भोजनार्थं योग्यस्थलान्तरप्राप्तिविषयकत्वाच्च । एवम् “ उदक्यामथ चण्डालग्रामसूकरकुक्कुटान् । भुक्त्यन्तरे समीक्ष्यैताञ्जपन्पूर्वोदितामृचम् ” इति ( संवर्तेन स्मृतिरत्नाकरे ) उक्ते भोजने एतद्दर्शने“मानस्तोके तनये मान” इति ऋचःपाठमात्रेण भुवि देवयात्रादाविव वा प्राप्तदोषो वारणीयः । अत एव “संकटे विषमस्थाने दुर्गे तु परिखे तथा। भद्रपत्तनमार्गेषु यथा शूद्रस्तथैव सः ” इति ( स्मृतिरत्नाकरे संवर्तेन ) उक्तं संगच्छते ॥ किंच “ कालोऽग्निः कर्ममृद्वायुः मनो ज्ञानं तपोजलम् । पश्चात्तापो निराहारः सर्वेमी शुद्धिहेतवः ” इति ( याज्ञवल्क्येन ३ ध्याये३१श्लो० )चोक्तरीत्या सम्भवद्वस्तुसामग्र्या शुद्धेः कल्पना।एवं “ अरणिं कृष्णमार्जारं चन्दनं सुमणिं घृतम् । तिलान्कृष्णाजिनं छागं गृहे चैतानि रक्षयेत्” इति (पराशरेण १२ ध्या० ३९ श्लो०) स्वस्थाने एतेषां रक्षणमात्रेणैव प्रकारान्तरेण प्राप्ताया अशुद्धेर्वारकोपायान्तराभ्यनुज्ञानात्।

ननु समुद्रयानं नावि शूद्रम्लेच्छचण्डालादीनामप्यवस्थितेस्तत्सम्भाषणादिश्रवणस्य कर्मानुष्ठानसमये परिहर्तुमशक्यत्वान्निषिध्यते ॥ तदुक्तं देवलेन—
“स्नानभोजनवेलायां जपहोमेषु पैतृके ॥ सन्ध्यादिनित्यकाम्येषु देवपूजासु सर्वदा ॥ चण्डालास्त्रिविधाः प्रोक्तास्तेषां सम्भाषणादिकम् ॥ श्रुत्वा कर्म परित्यज्य दृष्ट्वा तत्पुनराचरेत् ॥ अन्यथा दोषमाप्नोति कर्मभ्रष्टोभिजायते । चण्डालस्यैव यत्कर्म कृत्वा दृष्ट्वा परित्यजेत्” इतीति चेत् ॥ न ॥ “क्षुते निष्ठीवने चैव दन्तश्लिष्टे तथानृते । पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत्” इति ( मिताक्षरायां २७९ श्लो० व्या० संवर्तेन ) उक्तप्रायश्चित्तेन तद्दोषस्य परिहरणीयत्वात् ॥ योग्यस्थानान्तरसम्भवाविषयत्वाच्च । राजहर्म्यनदीतीरमहाक्षेत्रतीर्थविशेषपट्टाभिषेकाद्युत्सवविशेषतीर्थे[६] स्नाननामकरथोत्सवाङ्गावभृथस्नानमहोत्[७]पातधात्री[८]हवनयुद्धप्रसङ्ग[९]दुर्भिक्ष[१०]देश[११]क्षोभान्नसत्र[१२]राजसूया[१३]श्वमेध[१४]यात्रा[१५]दिषु प्रसङ्गेषु तेषु स्थानेषु महाधिकारिरूपेण यामिकाधिकारिरूपेणसेवकरूपेणधनिरूपेण वादकरूपेण नर्तकीरूपेण नटरूपेण तीर्थादिस्थानरक्षकयामिकरूपेण भाटककृच्छाकटिकनापितभाण्डपत्रपुष्पफलादिविक्रेतृरूपेण यथासम्भवं रूपान्त-

रेण च चण्डालम्लेच्छपतितादीनां नियमेन सद्भावात्तेषां-ध्वनिश्रवणेऽपि तत्समक्षं तत्सन्निधौ तत्तत्कालिकतत्तत्स्थानिकयोग्यतत्तत्कर्मणां शिष्टैर्द्विजैर्निरर्गलं सर्वैरनुष्ठीयमानत्वात्तत्राप्रवर्तमानस्य निषेधस्यात्र प्रवृत्तिः कथंमासीदिति तएव देवानांम्प्रिया[1]ःप्रष्टव्याइति तन्निराकरणस्य तदुद्धारस्य वाऽस्माभिरनपेक्षणीयत्वाच्च॥एतेन स्वोच्चारितमन्त्रास्तत्रत्यातिसमीपस्थचण्डालादिकर्णपथं प्रविशेयुरिति तत्र यानं निषिध्यते ॥ "चण्डालश्रोत्रावकाशे श्रुतिस्मृतिपाठे एकरात्रमभोजनम्" इति ( मिताक्षरायां २८९ श्लोकव्या ३ ध्यायेषट्त्रिंशन्मते) उक्तेः॥किंच"रजकश्चर्मकारश्च नटो बुरुडएव च। कैवर्त्तमेदभिल्लाश्चस्वर्णकारश्चसौचिकः ॥ कारुकोलोहकारश्च शिलाभेदी च नापितः।तक्षकस्तिलयन्त्रीचसूनी चक्री तथा ध्वजी । एते षोडशधाप्रोक्ताश्चण्डालाग्रामवासिनः॥ एतेषांदर्शनं स्पर्शं संभाषणमतः परम् ॥ स्नानभोजनवेलायां जपहोमार्चने तथा । स्वाध्यायसमये चैव ध्याने नेच्छन्तिसूरयः" इति ( हेमाद्रौ प्रायश्चि०गारुडे ) उक्तेरेतेषु प्रायो बहूनांसम्बन्धोभवत्येवेति दोष इति परास्तम् ॥ "दर्शने सूर्यमालोकेद्भोजनेभोजनं त्यजेत् । संभाषणेचपाणिभ्यां श्रोत्रे

( १ ) देवानांप्रियः कर्मनिष्ठइत्यर्थः ।

सम्यगुपस्पृशेत् ॥ उत ब्राह्मणसंभाषांकृत्वादोषात्प्रमुच्यते" इत्यत्रैव दोषतारतम्येन प्रायश्चित्तोक्तेश्च ॥

ननु "नैकवासा न च द्वीपे नान्तरिक्षेकदाचन । श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्" इति ( स्मृतिसारे ) वचनेन भूसम्बन्धं विना नौयाने सामुद्रिके सुदूरगन्तव्ये कर्त्तव्या सन्ध्या निषिध्यते । नच काश्यादिक्षेत्रादिषुक्वचिन्महाप्रवाहेतिर्यक्प्रसारितेषु सुदृढदारुफलकादिषु धनिभीराजभिः कैश्चिदन्यैरपिद्विजैर्नित्यनैमित्तिकहव्यकव्यसन्ध्यापूजादीनां च दारुफलकमयेषु शिलामयेषु प्रासादादिषु प्रायोनुष्ठीयमानत्वेनाचारानुविद्धत्वाद्दोषोनेति वाच्यम् ॥ स्वसंयुक्तसंयुक्तसंयुक्तत्वादिसम्बन्धेन गङ्गानिखातस्तम्भान्तरालरज्जूपरिसंस्थापितफलकोपर्युपविश्यजपादिकर्तुःतथा प्रासादे तत्तत्कर्मकर्तुःस्वसंयुक्तफलकसंयुक्तस्तम्भसंयुक्तत्वेन सम्बन्धेन भूसम्बन्धइति यद्युच्यतेतदास्वसंयुक्तनौ संयुक्तजलसंयुक्तत्वसम्बन्धेनात्रापिभूसम्बन्धोस्त्येवेति निषेधाप्राप्तेःन च फलकानां चैकस्मिन्भागेतदसंबद्धत्वेऽप्यन्यास्मिन्भागे तत्सम्बद्धत्वेनप्रासादादौशिलाफलकानां जपार्थकदार्वासनादिवत्साक्षाद्भूसम्बद्धत्वेन प्रासादप्रसारितशिलाफलकादीनां स्वतोभूत्वेन वा न दोषः । अत्र तु जलस्य नावोधःस्थस्य ततोभेदेन दोषो दुर्वार

इति वाच्यम् ॥ समुद्रादिगतमहाजलस्थनौकोपविष्टाना-मपितज्जलगतलवणाद्यात्मकसूक्ष्मपार्थिवभागानां नौका-मूलतलाधोजलाधिकरणीभूतमहाकठिनभूपर्यन्तं प्रासाद-गतेष्टकामेलनरीत्या परस्परसंयुक्तत्वेन पृथिवीसम्बन्ध स्यतत्रापिवक्तुंशक्यत्वादिति चेत् ॥ न ॥ महाजलस्य पञ्चीकृतत्वेन तत्रत्यतत्परमाणूनां पृथिवीत्वं नेत्यपलापितुमशक्यत्वात् । "पृथिवी द्विविधा नित्याऽनित्या च । नित्यापरमाणुरूपा । अनित्याका-र्यरूपा" इति ( वैशेषिकेध्याये १ आह्निके )—"पृथिव्यादिषु रूपरसगन्धस्पर्शा द्रव्यानित्यत्वादनित्याश्च २ एतेन नित्येषु नित्याश्च ३" इति । तथा श्रीमद्गौतमकणादमह-र्षिभिः परमाणुरूपायन्ताद्भिन्नायामपि पृथिवीत्वाङ्गीका-रेण तज्जलेतत्परमाणूनांतद्व्यणुकादीनां वा लौकिक-व्यवहारप्रसिद्धभुवमारभ्य यावन्नौकापर्यन्तं क्वचिदाधि-क्येन क्वचिदल्पतया च परम्परया शृङ्खलावत्सम्बद्धत्वे-न पृथिवीसम्बद्धत्वस्थैर्याच्च ॥ नच परमाणुद्वयत्रयचतु-ष्टयादीनामधोधः सम्बन्धे त्वयोच्यमाने शृङ्खलादितु-ल्यतया सूक्ष्मपरमाणुत्वादिव्यवहारो नोपपद्यते । तस्या-च्छिन्नतन्तुवद्दीर्घखण्डसूक्ष्मपृथिवीत्वाक्रान्तत्वेन तस्या-स्तन्तुरूपपृथिव्याः कैरप्यदृष्टचरत्वात् ॥ किञ्चपरमाण्वादि

सूक्ष्मभागानांमध्येयोन्तरालाकाशजलान्यतरभागः स न पृथिवीति परम्परया लौकिकव्यवहारविषयभूतलमारभ्य यावन्नौकातलमखण्डितत्वेन भूसम्बन्धाभावात् । एवंच भूसम्बद्धैव नौरिति त्वदुक्तिर्वन्ध्यापुत्रायते इति वाच्यम्। लौकिकव्यवहारविषयभूखण्डेपि परमाणुद्वयमारभ्य यावत्परममहाभूखण्डं जलीयपार्थिवपरमाण्वादीनां सम्बन्धवदेव पार्थिवपरमाणूनां सम्बन्धो न विजातीयः क्वचिदपि पार्थिवांशाधिक्यमन्तरेत्यवश्यमभ्युपेयंसर्वैरपि।अन्यथादावाग्निना दग्धेरण्ये वृष्टे देवे औष्ण्यस्य जलस्य च भुवोन्तः प्रवेशानापत्तेः ॥ सर्वत्र तथात्वादसम्भववारणाय तत्राप्यान्तरालिकतयाकाशादीनां सत्त्वाभ्युपगमात् ॥ तत्तत्संयुक्तत्वव्यवहारस्त्वान्तरालिकाकाशस्यात्यल्पत्वोपाधिवशेनेति गृहाण ॥ यावत्सूर्यमण्डलमौष्ण्याधिक्यप्रदेशावधि शैत्यसंयुक्तदेशादारभ्योत्तरोत्तरं संश्लेषस्यतथा तथा दार्ढ्यं न्यूनंन्यूनतरं न्यूनतममिति पृथिव्यांस्वाभाविकत्वात् ॥ अत एव पञ्चाशत्कोटिविस्तीर्णा पृथिवीतिपौराणिकोक्तिरप्येतदाशया नासङ्गता।एतेन"अन्तर्जानुः शुचौ देशे उपविष्ट उदङ्मुखः । प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्" इति ( याज्ञवल्क्यस्मृतौ १ ध्या० १८ श्लो० व्या० मिताक्षरा-

यां ) "देश इत्युपादानाच्छयनासनादिनिषेधः" इत्युक्ता-वादिपदेन नौकाग्रहणादत्रापि तन्निषेधः प्राप्नोती-त्यपि समाहितम् ॥ शास्त्रे शास्त्रीयपृथिव्या एव ग्रहणस्य न्याय्यत्वाच्च ॥ देश इत्युक्ते शास्त्रीयशुचित्वावश्यकता-ख्यापनार्थत्वाच्च ॥ वृक्षादीनां दार्वाद्यासननौकादीनामपि श्रीमद्गौतमकणादाचार्याभ्यां तत्तद्वस्तूद्देशलक्षणपरीक्षणा थैव प्रवृत्ताभ्यामास्तिकशिरोमणिभ्यां नास्तिकप्रभिन्न-स्तम्बेरमकण्ठीरवाभ्यां स्वस्वदर्शनउद्दाङ्कितलक्षणेन पृथि-वीत्वस्यैवसिद्धेश्च । सुवर्णस्य तैजसत्ववदस्यपृथिवीत्वम-स्य जलत्वमित्यादिशास्त्रीयव्यवहारनिश्चयेतयोरेवशरणी-कर्तव्यत्वाच्च । नौकायां मृद्भिः कृत्रिमभूपरिकल्पनेन स्वतो भूत्वैपत्तलताम्ररजताद्यासनकल्पनेन वा निषेधानवका-शाच्च ॥ नच नौकायां मृल्लेपादिना कृत्रिमभूकल्पनेपि "यत्र प्रसूयते नारी म्रियते दह्यतेपि वा ॥ चण्डाला-ध्युषितं यत्र यत्र विष्ठादिसंगतिः । एवं कश्मलभूयिष्ठा भूरमेध्या प्रकीर्तिता ॥ श्वसूकरखरोष्ट्रादिसंस्पृष्टा दुष्टतां व्रजेत् । अङ्गारकुशकेशाद्यैरस्थिभिर्मलिनाभवेत्" इति ( मिताक्षरायां १ ध्या० १८८ श्लो० व्या० देवलेन ) उक्तरीत्या समुद्रे नावि चण्डालादिभिरनध्यु-षितवासयोग्यस्थानालाभेन तदध्युषितप्रदेशानां चामे-

ध्यत्वं दुष्टता मलिनत्वं वेति तत्र तद्यानं निषिध्यत इति वाच्यम् ॥ " भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ॥ सेकादुल्लेखनाल्लेपाद्गृहं मार्जनलेपनात् ॥ " इति ( याज्ञवल्क्येन १ ध्या० १८८ श्लो० ) तथा " खननात्पूरणाद्दाहादभिवर्षेणलेपनात् । गोभिराक्रमणात्कालाद्भूमिः शुध्यति सप्तधा" इति ( पराशरमाधवीये ७ध्याये ३८श्लो० व्या० यमेन) उक्तेगोमयलेपमार्जनादिना तच्छुद्धेः संपादयितु शक्यत्वात् ॥ "वक्ष्यतेऽतः परं सर्वं मेध्यामेध्यसमुच्चयम् । शुचिभूतं स्वयं शुद्धं पवित्रं चेति केवलम् । मेध्यं चतुर्विधंलोके प्रजानां मनुरब्रवीत् । दूषितं कश्मलं दुष्टं वर्जितं चेति लिङ्गतः। चतुर्विधममेध्यं च सर्वं व्याख्यास्यते पुनः । नवं वा निर्मलं वापि शुचीति द्रव्यमुच्यते । शुद्धं पवित्रभूतं च पूतमित्यभिधीयते। स्वयमेव हि यद्द्रव्यं केवलं धन्यतांगतम्। स्थावरं जगमं वापि स्वयं शुद्धमिति स्मृतम् । अन्यद्रव्यैरदूष्यं यत्स्वयमन्यानि शोधयेत्। हव्यकव्येषु पूज्यं यत्तत्पवित्रमिति स्मृतम्। अथ सर्वाणि धान्यानि सर्वाण्याभरणानि च। अवर्ज्यं भक्ष्यजातं वा शुचीन्येतानि केवलम्" इत्यादिना चतुर्विधं मेध्यं निरूप्यामेध्यं दूषयित्वा च "शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते। मानुषास्थिवसाविष्ठारेतो-

मूत्रार्तवानि चाकुणपं पूयमित्येतत्कश्मलं चाप्युदाहृतम् । स्वेदाश्रुबिन्दवः फेनं निरस्तं नखरोम च॥आर्द्रचर्मासृगित्येतद्दुष्टमाहुर्द्विजातयः" इति पराशरमाधवीये ११ ध्याये १ श्लोक व्या० देवलेन ) उक्तेर्मेध्यत्वामेध्यत्वयोर्निर्णये वाच्ये "अश्वो हस्तीरणश्छत्रं रश्मयश्चन्द्रसूर्ययोः।भूमिरग्नी रजो वायुरापो दधि घृतं पयः। सर्वाण्येतानि शुद्धानि स्पर्शे मेध्यानि नित्यशः" इति ( पराशरमाधवीये७ध्याये३९श्लो० व्या० ) उक्तेरशुद्धायाभुवःशुद्धेर्निरूपयितुंशक्यत्वाच्च । सप्रकारश्च विशेषणाभिहितः"पञ्चधा च चतुर्द्धा च भूरमेध्या विशुध्यति। दुष्टापि सा द्विधा त्रेधा शुध्यते मालिनैकधा" इति ( मिताक्षरायां१ध्या० १८८ श्लो०व्या० ) तथा ( पराशरमाधवीये७ध्या० ३९श्लोक व्या०देवलेन ) । "तत्र पञ्च विधा शुद्धिः "सम्मार्जनोपाञ्जनेन सेकेनोल्लेखनेन च। गवांच परिवासेन भूमिश्शुध्यति पञ्चभिः।" इति (मनु० ५ ध्या० श्लो० १२४ )एतेष्ववंपञ्चविधेषु यथायोगं चातुर्विध्यादिकंयोजनीयम् । यद्वा " दहनात्खननाच्चैव उपलेपनधावनात् । पर्जन्यवर्षणाद्भूमेःशौचं पञ्चविधं स्मृतम्" इति देवलेन उक्ता द्रष्टव्याः पञ्चविधाः शुद्धयः" इति। ( पराशरमाधवीये ७ ध्याये ३९ श्लोक व्या० ) उक्तशुद्धिकल्पनया दोषाभावाच्च ॥ अयमेव

शुद्ध्युपायो म्लेच्छदेशीयभूम्यादौकल्पनीय इति नविस्मर्तव्यम्।एवं नौकाया अपि "आसनंशयनं यानं नावःपन्थास्तृणानि च।चण्डालपतितस्पृष्टं मारुतेनैव शुध्यति।त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयत् । अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।" इति ( ७ ध्या० ३४ श्लो० पराशरस्मृतिव्याख्याने माधवीये बोधायनेन ) " रथ्याकर्दमतोयानि नावःपन्थास्तृणानि च । मारुतार्केणशुध्यन्ति पक्वेष्टकचितानि च" इति ( पराशरेण ७ ध्याये ३४ श्लो० ) तथा "निर्दिष्टानामेषां चण्डालादिस्पर्शेऽपि वाय्वातपादिभिः शुद्धिः" इति ( तत्रैव व्याख्याने माधवाचार्येण ) चोक्तेर्नावोऽशुद्धिरिति तत्रत्यकल्पितभुवोप्यशुद्धिरित्याक्षेपस्यापि प्रागुक्तरीत्यानवतारात् ॥ नौकाया दार्वासनत्वेन " दार्वासनं तु दारिद्र्यम्" इति निषेधेन तत्र सन्ध्या न स्यादिति परास्तम्॥दर्भकम्बलादीनामुक्तासनोपरि परिस्तरणेन तदाशङ्काया अनवकाशाच्च ॥ युक्तं चैतत् ॥ सञ्चारयोग्यायाः साक्षाद्भुवो मधुकैटभमेदोभिराच्छादितत्वेन तस्या अशुद्धत्वात्तत्रदार्वासनकम्बलदर्भासनादिभिर्विना जपादिसत्कर्मणां निषिद्धत्वात्तत्र कथं तानिस्युः॥अतएवेयं मेदिनीत्युच्य-

ते ॥ अतएव स्वस्वकर्मानुष्ठानयोग्यसंशुद्धये प्रातःप्रत्यहं गृहादिकं लोकैस्त्रैवर्णिकैर्गोमयेन परिलिप्यते।एतेन विधिविहितगङ्गादिमृद्भिर्विना म्लेच्छगृह इव क्वचित्केवलमृद्भिर्लेपादिकमयुक्तमिति सिद्धम् ॥ नच " नान्तरिक्षे कदाचन" इति वचनस्य का गतिः सर्वस्यापि प्रदेशस्य स्थूलसूक्ष्मपृथिवीत्वाक्रान्तत्वादिति वाच्यम् ॥ स्थूलसूक्ष्मोभयपृथिवीबहिर्भागस्य पृथिव्याःपरितः सहस्रान्तरयोजनेषु जलपृथिव्याकाशेषु परिदृश्यमान गतिपरिमाणतच्छक्त्यादेरवगतत्वेनैतावद्दूरमेवात्र वायोर्गतिरिति निर्णेतुं शक्यतया तद्गत्यभावे तेजो जलपृथिव्यंशस्यापि तत एव गत्यभावासिद्धिरितियंत्र तदभावस्त स्यैव शुद्धाकाशत्वात् ॥ न च तत्राकाशे कस्यापि स्थित्यसम्भवेन सन्ध्यादिकर्मणां सुतरामसंभव इति तन्निषेधोक्तिर्व्यर्थेति वाच्यम् ॥ स्थूलपृथिव्यपेक्षया परमाणुद्व्यणुकादिपृथिव्यपेक्षया वा भेदविवक्षयाकाशमिति तादृशभेदमनपेक्ष्यपृथिवीतिव्यवहार इति व्यवहारद्वयस्यापि प्रामाणिकत्वात् । अन्यथास्थूलपृथिव्या उपरि मेदिनीत्वदोषव्यावृत्तये दर्भासनादौ कर्मानुष्ठाने " नान्तरिक्षे कदाचन " इति निषेधापत्तिः ॥ प्राचीनकालेन्तरा विमानादिषु सञ्चारेपि तत्रापायबाहुल्यमभि-

वीक्ष्यतत्रतथाव्यवहारानिवारणायान्तरा सञ्चारेजायमाना-पायनिमित्तकमरणे प्रायश्चित्तप्रतिपादनवत्सन्ध्यानिषेधो व्यवाह्रियमाणस्थूलमहापृथिव्युपरिलक्षणयाप्रयोगणप्रवृत्ते श्च। अएव चत्वार्येवपृथिव्यप्तेजांसिभूतानीतिमतेनुपपत्ति र्न। न च दर्भादीनामपि गौतमकाणादमतेपृथिवीत्व-मिति तस्याअपि मेदिनीत्वमिति तत्रापि सन्ध्यादि-कर्माणि न स्युरिति वाच्यम्॥तस्यपृथिवीत्वेपितस्य मेदि-नीत्वधर्मानाक्रान्तत्वस्य दर्भकम्बलदार्वासनादिविधायक-वचनेनानुमीयमानत्वात् ॥ अन्यथाकम्बलादीनामपिपृ-थिवीत्वात्तदसंगतिः। अत एव देवदत्तो न भूम्यामुपविष्टः किन्तु कटे इति खेगच्छतीति खग इति विहग इति च व्यवहाराः स्वरसत उपपद्यन्ते ॥ अत एव भुवं स्थूलां परित्यज्य समाधिस्थस्य कदाचिद्दे-हत्यागे प्रायश्चित्तं न। विमानाद्वृक्षात्पततो भूसम्बन्धात्पूर्वं मध्ये मरणेन्तरामरणप्रायश्चित्तमनुष्ठीयते। न च समा-धिस्थस्य पापाभावेन न प्रायश्चित्तमनुष्ठीयते नत्वदुक्तार्था श्रयणेनेतिवाच्यम् ॥ तं समाधिस्थमुद्दिश्य पुत्रैः क्रि-यमाणस्य सापिण्ड्यान्तस्य क्वचिन्नारायणबल्य-न्तस्यवाकर्मणोवैयर्थ्यापत्तेः ॥ वस्तुतः कर्तुस्त-दकरणे प्रत्यवायश्रवणात्तदपाकरणाय यतिव्रात्यादि-

भ्यः श्राद्धादिकं क्रियत इत्यन्यत् । एवं च वायुतेजःशून्यस्य प्रदेशस्य तन्मतेकस्याप्यप्रसिद्धतया " नान्तरिक्षेकदाचन " इत्यनेनातिवातातितेजस्वत्प्रदेशे कर्म न कुर्यादिति तत्र तन्निषेधेप्यन्यत्र तदयोग इति सिद्धम् ॥

किं च श्रीरामेण सर्वैः सह रावणसंहारोत्तरं विमानमारुह्य प्रत्यागमनसमये लङ्कातोयोध्यां यावन्मध्ये सन्ध्यार्थमग्निकार्यार्थं वावतरणस्य कुत्राप्यनुल्लेखात् । नच तस्य सन्ध्यानावश्यकीति वाच्यम्। 'कौसल्या सुप्रजाराम पूर्वासन्ध्या प्रवर्तते । उत्तिष्ठनरशार्दूलकर्तव्यं दैवमाह्निकम् ' इत्यादिना तत्र तत्र विश्वामित्रेण तदुत्थापनं तदनन्तरं सन्ध्यानुष्ठानमित्यर्थस्य ( श्रीमद्वाल्मीकिरामायणादौ ) प्रसिद्धत्वात् ॥ विभीषणस्य ब्राह्मणत्वेन तस्य तेन सहायोध्यां प्रति गमने तदर्थं वा विमानावतरणस्य कुत्राप्यवर्णनाच्च । एतेन बिभीषणस्य ब्राह्मणत्वे मानाभाव इत्यपास्तम् ॥ तस्य पुलस्त्यब्रह्मवंशेजातत्वेन ब्राह्मण्यस्य निर्विवादत्वात्। रामेण रावणादिब्रह्महत्यादोषवारणाय तीर्थयात्राश्वमेधादीनां वाल्मीकिकृतश्रीमद्रामायणानन्दरामायणाध्यात्मरामायणादिषुस्पष्टमुक्तत्वाच्च ॥ एवं तत्रैवानन्दरामायणे श्रीरामेण तीर्थयात्रार्थं शतसौधेन विमानेन गम-

नसमये वसिष्ठस्याग्निहोत्रार्थमेकं सौधं तत्रासीदिति वर्ण-
नेन सन्ध्याग्निहोत्रादेर्विमानेनुष्ठानवदत्रापि नौकासु तद-
नुष्ठानस्य निर्निरोधत्वात् ॥ न च तत्रेतायुगे इदंतु
कलावितीदानीं समुद्रयानं निषिध्यत इति कथं तद-
नुष्ठानं निर्निरोधं स्यादिति वाच्यम् ॥ "मनुनोक्तो-
ब्रवीन्मत्स्यो मनुं वै पालने रतः। अवतीर्णोभवा-
यास्य जगतो दुष्टनष्टये ॥ ११ ॥ सप्तमेथ दिने
ह्यब्धिः प्लावयिष्यति वै जगत्। उपस्थितायां नावि त्वं
बीजादीनि निधाय च ॥ १२ ॥ सप्तर्षिभिः परिवृतो
निशां ब्राह्मीं चरिष्यसि" इति (आग्नेय महापुराणे २
ध्याये) उक्तरीत्या ब्राह्म्यामेकस्यां निशायामन्तर्भूते
षुबहुषु कलियुगेषु तदन्तर्गतैस्सप्तर्ष्यादिभिः सन्ध्या
तत्रानुष्ठितेत्यस्यावश्यसिद्धत्वात् ॥ न च तैः सा नानु-
ष्ठितैव। तत्र। प्रमाणाभावादितिवाच्यम् ॥ प्रत्यवा-
यित्वापत्त्याऋषित्वापायप्रसङ्गात् ॥ कलौधर्मसूनुना च
युद्धे ब्राह्मणादिहननदोषपरिहारायाश्वमेधरूपप्रायश्चित्ता
नुष्ठानविहितयागीयपशुहिंसायामपि यागान्ते तद्दोषप-
रिहारार्थं क्रियमाणप्रायश्चित्तानुष्ठानस्याऽऽसंगवत्कलौस-
मुद्रयानं धर्म एवेति तत्र सन्ध्याद्यभावस्य प्रकारान्तरेण
परिहाराभ्युपगमाच्चावस्तुतःयथातथावास्तु गायत्र्या सूर्यो

पस्थानं मुख्यमितिगायत्रीजपमात्रं वाकार्यमेव॥ किं च "गवां वालपवित्रेण सन्ध्युपास्ति करोतियः ॥ सवै द्वादशवर्षाणि कृतसन्ध्योभवेन्नरः" इति (स्मृतिमु. आह्निके कौशिकेन) उक्तंपवित्रंच न्यूनतापरिहारकमितिदिक्॥ न च कलावश्वमेधस्य "नराश्वमेधौ मद्यं च" इति (निर्णयसिन्धौ ३ यपरिच्छेदान्तेकलिवर्ज्ये) गणनेन निषिद्धत्वात्कथं कलौ तेनाश्वमेधोनुष्ठित इति वाच्यम्। कलियुगादौ "शतेषु षट्सु सार्धेषु" इति राजतरंगिण्यामुक्तेः कलौ ६५० वर्षोत्तरं कुरुपाण्डवयुद्धस्य वर्णनात्। सर्वतत्त्वशोधकैराङ्गलैरप्याङ्गलशकात्पूर्वतनेभ्यः १४०० वर्षेभ्यः पूर्वं तद्युद्धवर्णनात्तदुत्तरमेव (देवीभागवते ७ स्कन्ध) उक्तरीत्याकल्यादौ षट्त्रिंशद्वर्षपर्यन्तं युधिष्ठिरस्थितिवर्णनेन तदा तत्पूर्वं कलिसन्धौ वा पाण्डवैरश्वमेधानुष्ठानेन जयपुरे आंग्लशके १७०६ तमे वर्षे तदधिपेनश्रीमन्महाराजजयसिंहवर्मणाश्वमेधानुष्ठानात्कलियुगसत्त्वेपीति महामहाविद्वद्वरिष्ठसंमतिमन्तरा तस्य निर्वोढुमशक्यत्वेन तत्र सम्मतेर्निषेधविषये साङ्गानुष्ठानस्यैव कर्तुमशक्यता व्यङ्गता वा क्वचित्तज्जन्यपुण्यापेक्षया दोषाधिक्यप्रादुर्भाव इत्यनुमानवत्तत्कालतद्देशानुसारेण तथा नौयानविषये निषेधेपि यथाविधिकर्मादिकमनुष्ठाय गन्तृणां निषेधो नेत्यर्थस्याप्यनुमीयमानत्वात्। "सतुं दृष्ट्वा विशुद्धात्मात्वव-

गाहेत सागरम् । यजेत वाश्वमेधेन राजा तु पृथिवीपतिः ” इति ( पराशरेण १२ ध्या ७० ॥ श्लो ) उक्तेः कलिवर्ज्ये संकोचस्यानित्यत्वाभ्युपगमाच्चेतिदिक् ॥ तत्र मनुना सप्तर्षिभिश्च सन्ध्यादिकमननुतिष्ठद्भिस्तत्प्रत्योज्यप्रत्यवायपरिहारस्तु “इत्युक्त्वान्तर्दधे मत्स्यो मनुः कालप्रतीक्षकः । स्थितः समुद्रउद्वेले नावमारुरुहे तदा ॥ १५ ॥ एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः । नावं बद्ध्वा तस्य शृङ्गे मत्स्याख्यं च पुराणकम् ॥ १६ ॥ शुश्राव मत्स्यात्पापघ्नं संस्तुवन्स्तुतिभिश्च तम् ” इति ( आग्नेये महापुराणे २ ध्याये ) नानापापघ्नमत्स्यपुराणश्रवणेन कृतः । तत्रत्यपापघ्नमिति पदेन तस्य बोधनात् ॥ अन्यथा पुराणस्य सर्वस्यापि पापघ्नत्वपुण्योत्पादकत्वादीनां स्वतस्सिद्धत्वेन प्रसिद्धत्वात्तन्मात्रोक्तेरानर्थक्यापत्तिः ॥ जन्मजन्मान्तरार्जितमहामहापापानां निवर्तके न समुद्रदर्शनमात्रेण तच्छीकरसंसर्गे स्वयमसंस्पृश्यैव पात्रान्तरेणोद्धृत्यप्रोक्षणादिना मन्वादिवन्मत्स्यपुराणश्रवणेनवा यावत्पापस्य परिहर्तुंशक्यत्वाच्चेत्यलंपल्लवितेन ।

भुवीव शुद्धिरन्यत्राप्यस्त्येव न ततोधिका ।
प्रत्यन्तेत्या वश्यकीस्यात्तावत्यादिक्प्रदर्शिता ॥१॥

इत्यब्धिनौयानमीमांसायां स्नानसन्ध्यादिविचारनामकं द्वितीयं खण्डं समाप्तम् ॥ २ ॥

# अथ भक्ष्याभक्ष्यविचारनामकं तृतीयं खण्डमारभ्यते।



भक्ष्यभोज्यादिकं सर्वं भुवीवात्रापि नो भिदा।
आवश्यकं प्रसङ्गाद्यत्तदेवात्रविविच्यते ॥ १ ॥

नौकाप्रत्यन्तदेशगमनयोर्जलान्नविषयेऽनुपपत्तिर्बहुधा संभवतीति तद्विचार्यते।

ननु प्रत्यन्तदेशे गमनसमये नौकायां वा जलान्नयोरलाभावात्सर्वैरपि प्रायस्त्रैवर्णिकैस्तत्र गन्तुं न शक्यते इति "सिन्धुसौवीरसौराष्ट्र" इत्यत्र प्रत्यन्तपदग्रहणं नौकयाब्धियाननिषेधोऽपि। नच तत्र बहूनां शूद्राणां सत्त्वात्तद्द्वारा जलान्नादिकं संपादयितुं शक्नुम इति वाच्यम्। "शूद्रहस्तेन यो भुङ्क्ते पानीयं वा पिबेत्क्वचित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" इति (मिताक्षरायां ३ ध्या० २९० श्लो० व्या० क्रतुना) "अतीव तृषितो विप्रो न शूद्रस्योदकं पिबेत्।" इति (देवलेन) तद्दत्तजलान्नपानभोजनयोः प्रायश्चित्तोक्तेस्तदयोगात्। न च तत्र दधिपयोजलपरिपूर्णघटसहस्राणां सत्त्वात्ततस्तत्स्वयमानेतुं शक्यते। किंचान्नप्रतिनिधितया दधिपयआदीनि लभ्यन्ते। एवं च न काप्यनुपपत्तिरिति वा-

च्यम् । तेषां सर्वेषां चण्डालादिघटपरिपूर्णत्वेन तद्ग्रहणादौ त्रैवर्णिकक्रमेण "चण्डालघटसंस्थं तु यत्तोयं पिबति द्विजः । तत्क्षणात्क्षिपते यस्तु प्राजापत्यं समाचरेत् । यदि नोत्क्षिपते तोयं शरीरे यस्य जीर्यते ॥ २८ ॥ प्राजापत्यं सदातव्यः कृच्छ्रंसान्तपनं चरेत् । चरेत्सान्तपनं विप्रः प्राजापत्यमनन्तरः । तदर्धं तु चरेद्वैश्यः पादं शूद्रस्य दापयेत् ॥ २९ ॥ भाण्डस्थमन्त्यजानां तु जलं दधि पयः पिबेत् । ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव प्रमादतः ॥ ३० ॥ ब्रह्मकूर्चोपवासेन द्विजातीनां तु निष्कृतिः ॥ शूद्रस्य चोपवासेन तथा दानेन शक्तितः ॥ ३१ ॥" इति (पराशरेण ६ ध्याये) "द्विजश्चण्डालभाण्डस्थं सलिलं पिबते यदि॥षण्मासानाचरेत्कृच्छ्रं पञ्चगव्यं ततः पिबेत्॥ तस्यान्नमत्ति यो विप्रो द्विगुणं व्रतमाचरेत् ।"

(१) "भाण्डस्थितमभोज्येषु जलंदधि घृतं पयः । अकामतस्तु योभुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥ २५ ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा उपसर्पति । ब्रह्मकूर्चोपवासेन योज्या वर्णस्यनिष्कृतिः ॥२६॥ शूद्राणां नोपवासः स्याच्छूद्रोदानेन शुध्यति । ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत् ॥ २७ ॥" इति (पराशरस्मृतौ ११ ध्या) पाठान्तरं केषुचित्पुस्तकेषु दृश्यते । २-(ब्रह्मकूर्चम्)—"अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः । पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चमिति स्मृतम्" इति (परा-माध- ११ ध्या ३७ ॥ श्लो०व्या० ) । तत्प्रकारश्च विस्तरेण धर्मशास्त्रेषु वर्णितः ।

इति( विष्णुना ) "प्रपास्वरण्येघटके च सौरद्रोण्यां जलं कोशविनिस्सृतं च । श्वपाकचण्डालपरिग्रहेषु पीत्वा जलं पञ्चगव्येन शुद्धिः ।"इति ( मिताक्षरायां ३ ध्या २९०श्लो०व्या०आपस्तम्बेन ) च प्रायश्चित्तोक्तेस्त-ज्जलादिग्रहणायोगात् ॥ नच तत्रत्याश्चण्डालाश्शूद्रा वे-त्यत्र मानाभाव इति वाच्यम् । म्लेच्छास्ते स्युः । चातु-वर्ण्याश्रमाचारशून्यानां तत्त्वमितिग्रन्थकृद्भिरुक्तेः।ततश्च "म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेपि वा।जानु-दघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् । तत्तोयं यःपिबे-द्विप्रः कामतोऽकामतोपि वा।अकामान्नक्तभोजी स्यादहो-रात्रं तु कामतः"इति ( मिताक्षरायां३ ध्या २९०श्लो० आपस्तम्बेन ) उक्तेस्तद्ग्रहणायोगात् । एवंचतद्ग्रहणा-योगेनानुपपत्तेर्दुर्वारत्वादिति चेत् ॥ न॥ आपत्काले तज्जलादिग्रहणे दोषाभावात् । अत एव "मटचीहते ष्वाटिक्या सह भार्ययोषस्तिश्चाक्रायण इभ्यग्रामेप्रद्रा-णक उवास ॥ १ ॥ सहेभ्यं कुल्माषान् खादन्तं बिभिक्षे तँ होवाच । नेतोऽन्ये विद्यन्ते यच्चयेम इम उपनिहिता इति ॥ २ ॥ एतेषांमे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादिति होवाच ॥ ३॥

( ३ ) ( अरण्ये )—कूपे ।

नास्विदेतेव्युच्छिष्टा इति न वा अजीविष्यमिमां न खादन्निति होवाच कामोमे उदपानामिति ॥ ४ ॥ स ह खादित्वातिशेषाञ्जायाया आजहार साग्र इव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥ स ह प्रातस्सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥ तं जायोवच हन्त पत इम एव कुल्माषा इति तान् खादित्वामुं यज्ञं विततमेयाय ॥ ७ ॥ "इति ( छान्दोग्योपनिषदि १ मप्रपाटके ९ खण्डे ) "अन्नं हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते "इति ( तैत्तिरीयोपनिषदिब्रह्मवल्ल्यां२ नुवाक ) "अन्नं न निन्द्यात् " तैत्तिरीयोपनिषदि ३ वल्यां ७ नुवाके "अन्नं न परिचक्षीत "( तत्रैव ८ नुवाके)" अन्नं ब्रह्मेति व्यजानात् "इति च ( तत्रैव २ नुवा० ) "सर्वान्नानुमतिश्चप्राणात्यये तद्दर्शनात् "इति ( वेदान्तदर्शने २ ध्याये ४ र्थपादे २८ सू ) "जीवितात्ययमापन्नो योन्नमत्ति यतस्ततः । लिप्यते न स पापने पद्मपत्रमिवाम्भसा"इति( तत्रैव सूत्र श्रीशाङ्करभाष्ये ) येनविनानजीवतितद्भिन्नसुरामद्यादिकं विहायापदिसर्वान्नानुमत्यभ्यनुज्ञानमन्नस्यशुद्धत्वानिन्द्यत्वादिप्रतिपादनं च संगच्छते ॥ तदुक्तं ( माहाभारते शान्तिपर्वणि )

" युधिष्ठिर उवाच।

हीनेपरमकेधर्मेसर्वलोकाभिलंघिते ॥
अधर्मेधर्मतांनीतेधर्मेचाधर्मतांगते ॥ १ ॥
मर्यादासुविनष्टासुक्षुभितेधर्मनिश्चये ॥
राजभिःपीडितेलोकेपरैर्वापिविशांपते ॥ २ ॥
सर्वाश्रयेषुमूढेषुकर्मसूपहतेषुच ॥
कामाल्लोभाच्चमोहाच्चभयंपश्यत्सुभारत ॥३॥
अविश्वस्तेषुसर्वेषुनित्यंभीतेषुपार्थिव ॥
निकृत्याहन्यमानेषुवंचयत्सुपरस्परम् ॥ ४ ॥
संप्रदीप्तेषुदेशेषुब्राह्मणेचातिपीडिते ॥
अवर्षतिचपर्जन्येमिथोभेदेसमुत्थिते ॥ ५ ॥
सर्वस्मिन्दस्युसाद्भूतेपृथिव्यामुपजीवने ॥
केनास्विद्ब्राह्मणोजीवेज्जघन्येकालआगते ॥ ६ ॥
अतितिक्षुःपुत्रपौत्राननुक्रोशान्नराधिप ॥
कथमापत्सुवर्तेततन्मेब्रूहिपितामह ॥ ७ ॥
कथंचराजावर्तेतलोकेकलुषतांगते ॥
कथमर्थाच्चधर्माच्चनहीयेतपरंतप ॥ ८ ॥

भीष्म उवाच।

राजमूलामहाबाहोयोगक्षेमसुवृष्टयः ॥
प्रजासुव्याधयश्चैवमरणंचभयानिच ॥ ९ ॥

कृतंत्रेताद्वापरंचकलिश्वभरतर्षभ ॥
राजमूलाइतिमतिर्ममनास्त्यत्रसंशयः ॥ १० ॥
तस्मिंस्त्वभ्यागतेकालेप्रजानांदोषकारके ॥
विज्ञानबलमास्थायजीवितव्यंभवेत्तदा ॥ ११ ॥
अत्राप्युदाहरंतीममितिहासंपुरातनम् ॥
विश्वामित्रस्यसंवादंचांडालस्यचपक्कणे ॥ १२ ॥
त्रेताद्वापरयोःसंधौतदादैवविधिक्रमात् ॥
अनावृष्टिरभूद्धोरालोकेद्वादशवार्षिकी ॥ १३ ॥
प्रजानामतिवृद्धानांयुगांतेसमुपस्थिते ॥
त्रेताविमोक्षसमयेद्वापरप्रातिपादने ॥ १४ ॥
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ॥
जगाम दक्षिणं मार्गं सोमो व्यावृत्तलक्षणः ॥१५॥
नावश्यायोपितत्राभूत्कुतएवाभ्रजातयः ॥
नद्यःसंक्षिप्ततोयौघाःकिंचिदंतर्गतास्ततः ॥ १६ ॥
सरांसिसरितश्चैवकूपाःप्रस्रवणानिच ॥
हतत्विषो न लक्ष्यंतेनिसर्गाद्दैवकारितात् ॥ १७॥
उपशुष्कजलस्थायाविनिवृत्तसभाप्रपा ॥
निवृत्तयज्ञस्वाध्यायानिर्वषट्कारमंगला ॥ १८ ॥
उच्छिन्नकृषिगोरक्षानिवृत्तविपणापणा ॥
निवृत्तयूपसंभाराविप्रनष्टमहोत्सवा ॥ १९ ॥

अस्थिसंचयसंकीर्णामहाभूतरवाकुला ॥
शून्यभूयिष्ठनगरादग्धग्रामानिवेशना ॥ २० ॥
क्वचिद्चौरैःक्वचिच्छस्त्रैःक्वचिद्राजभिरातुरैः ॥
परस्परभयाश्चैवशून्यभूयिष्ठनिर्जना ॥ २१ ॥
गतदैवतसंस्थानावृद्धलोकनिराकृता ॥
गोजाविमाहिषीहीनापरस्परपराहता ॥ २२ ॥
हतविप्राहतारक्षाप्रनष्टौषधिसंचया ॥
सर्वभूततरुप्रायाबभूववसुधातदा ॥ २३ ॥
तस्मिन्प्रतिभयेकालेक्षतेधर्मेयुधिष्ठिर ॥
बभूवुःक्षुधितामत्याःखादमानाःपरस्परम् ॥ २४॥
ऋषयोनियमांस्त्यक्त्वापरित्यज्याग्निदेवताः॥
आश्रमान्संपरित्यज्यपर्यधावन्नितस्ततः ॥ २५ ॥
विश्वामित्रोऽथभगवान्महर्षिरनिकेतनः ॥
क्षुधापरिगतोधीमान्समंतात्पर्यधावत ॥ २६ ॥
त्यक्त्वादारांश्चपुत्रांश्चकस्मिंश्चजनसंसदि ॥
भक्ष्याभक्ष्यसमोभूत्वानिरग्निरनिकेतनः ॥ २७ ॥
सकदाचित्परिपतञ्श्वपचानांनिवेशनम् ॥
हिंस्त्राणांप्राणिघातानामाससादवनेक्वचित् ॥२८॥
विभिन्नकलशाकीर्णंश्वचर्मच्छेदनायुतम् ॥
वराहखरभग्नास्थिकपालघटसंकुलम् ॥ २९ ॥

मृतचैलपरिस्तीर्णंनिर्माल्यकृतभूषणम् ॥
सर्पनिर्मोकमालाभिःकृतचिह्नकुटीमठम् ॥ ३० ॥
कुक्कुटारावबहुलंगर्दभध्वनिनादितम् ॥
उद्घोषद्भिःखरैर्वाक्यैःकलहद्भिःपरस्परम् ॥ ३१ ॥
उलूकपक्षिध्वनिभिर्देवतायतनैर्वृतम् ॥
लोहघंटापरिष्कारंश्वयूथपरिवारितम् ॥ ३२ ॥
तत्प्रविश्यक्षुधाविष्टोविश्वामित्रोमहानृषिः ॥
आहारान्वेषणेयुक्तःपर्यंयत्नंसमास्थितः ॥ ३३ ॥
नचक्वचिदविंदत्साभिक्षमाणोपिकौशिकः ॥
मांसमन्नंफलंमूलमन्यद्वातत्र किंचन ॥ ३४ ॥
अहोकृच्छ्रंमयाप्राप्तमितिनिश्चित्यकौशिकः ॥
पपातभूमौदौर्बल्यात्तस्मिंश्चांडालपक्कणे ॥ ३५ ॥
सचिंतयामासमुनिःकिंनुमेसुकृतंभवेत् ॥
कथंवृथानमृत्युःस्यादितिपार्थिवसत्तम ॥ ३६ ॥
सददर्शश्वमांसस्यकुतंत्रींविततांमुनिः ॥
चाण्डालस्यगृहेराजन्सद्यःशस्त्रहतस्यवै ॥ ३७ ॥
सचिंतयामासतदास्तैन्यंकार्यमितोमया ॥
नहीदानीमुपायोमेविद्यतेप्राणधारणे ॥ ३८ ॥
आपत्सुविहितंस्तैन्यंविशिष्टंचमहीयसः ॥
विप्रेणप्राणरक्षार्थंकर्त्तव्यमितिनिश्चयः ॥ ३९ ॥

हीनादादेयमादौस्यात्समानात्तदनंतरम् ॥
असंभवेवाददीतविशिष्टादपिधार्मिकात् ॥ ४० ॥
सोहमंत्यावसायानांहराम्येनांप्रतिग्रहात् ॥
नस्तैन्यदोषंपश्यामिहरिष्यामिश्वजाघनीम् ॥४१॥
एतांबुद्धिंसमास्थायविश्वामित्रोमहामुनिः ॥
तस्मिन्देशेससुष्वापश्वपचोयत्रभारत ॥ ४२ ॥
सविगाढांनिशांदृष्ट्वासुप्तेचांडालपक्कणे ॥
शनैरुत्थायभगवान्प्रविवेशकुटीमतः ॥ ४३ ॥
ससुप्तइवचांडालःश्लेष्मापिहितलोचनः ॥
परिभिन्नस्वरोरूक्षःप्रोवाचाप्रियदर्शनः ॥ ४४ ॥

श्वपचउवाच।

कःकुतंत्रींघट्टयतिसुप्तेचांडालपक्कणे॥
जागर्मिनात्रसुप्तोस्मिहतोसीतिचदारुण ॥ ४५ ॥
विश्वामित्रस्ततोभीतःसहसातमुवाचह ॥
तत्रव्रीडाकुलमुखःसोद्वेगस्तेनकर्मणा ॥ ४६ ॥
विश्वामित्रोहमायुष्मन्नागतोहंबुभुक्षितः ॥
मावधीर्ममसद्बुद्धेयदिसम्यक्प्रपश्यसि ॥ ४७ ॥
चांडालस्तद्वचःश्रुत्वामहर्षेर्भावितात्मनः ॥
शयनादुपसंभ्रांतउद्ययौप्रतितंततः ॥ ४८ ॥
सविसृज्याश्रुनेत्राभ्यांबहुमानात्कृताञ्जलिः ॥

उवाचकौशिकंरात्रौब्रह्मन्किंतेचिकीर्षितम् ॥४९॥
विश्वामित्रस्तुमातंगमुवाचपरिसांत्वयन् ॥
क्षुधितोहंगतप्राणोहरिष्यामिश्वजाघनीम् ॥ ५० ॥
क्षुधितःकलुषंयातोनास्तिह्रीरशनार्थिनः ॥
क्षुच्चमांदूषयत्यत्रहरिष्यामिश्वजाघनीम् ॥ ५१ ॥
अवसीदंतिमेप्राणाःश्रुतिर्मेनश्यतिक्षुधा ॥
दुर्बलोनष्टसंज्ञश्चभक्षाभक्षाविवर्जितः ॥ ५२ ॥
सोऽधर्मंबुद्ध्यमानोऽपिहरिष्यामिश्वजाघनीम् ॥
अटन्भैक्ष्यंनविंदामियदायुष्माकमालये ॥ ५३ ॥
तदाबुद्धिःकृतापापेहरिष्यामिश्वजाघनीम् ॥
अग्निर्मुखंपुरोधाश्चदेवानांशुचिषाड्विभुः ॥ ५४ ॥
यथावत्सर्वभुग्ब्रह्मातथामांविद्धिधर्मतः ॥
तमुवाचसचांडालोमहर्षेशृणुमेवचः ॥ ५५ ॥
श्रुत्वातत्त्वंतथातिष्ठयथाधर्मोनहीयते ॥
धर्मंतवापिविप्रर्षेशृणुयत्तेब्रवीम्यहम् ॥ ५६ ॥
शृगालादधमंश्वानंप्रवदंतिमनीषिणः ॥
तस्याप्यधमउद्देशःशरीरस्यश्वजाघनी ॥ ५७ ॥
नेदंसम्यग्व्यवसितंमहर्षेधर्मगर्हितम् ॥
चांडालस्वस्यहरणमभक्ष्यस्याविशेषतः ॥ ५८ ॥
साध्वन्यमनुपश्यत्वमुपायंप्राणधारणे ॥

नमांसलोभात्तपसोनाशस्तेस्यान्महामुने ॥ ५९॥
जानताविहितंधर्मेनकार्योधर्मसंकरः ॥
मास्मधर्मंपरित्याक्षीस्त्वंहिधर्मभृतांवरः ॥ ६० ॥
विश्वामित्रस्ततोराजन्नित्युक्तोभरतर्षभ ॥
क्षुधार्त्तःप्रत्युवाचेदंपुनरेवमहामुनिः ॥ ६१ ॥
निराहारस्यसुमहान्ममकालोभिधावतः ॥
नविद्यतेप्युपायश्चकश्चिन्मेप्राणधारणे ॥ ६२ ॥
येनयेनविशेषेणकर्मणायेनकेनचित् ॥
अभ्युज्जीवेत्साद्यमानःसमर्थोधर्ममाचरेत् ॥ ६३॥
ऐंद्रोधर्मःक्षत्रियाणांब्राह्मणानामथाग्निकः ॥
ब्रह्मवह्निर्ममबलंभक्ष्यामिशमयन्क्षुधाम् ॥ ६४ ॥
यथायथैवजीवेद्धितत्कर्तव्यमहेलया ॥
जीवितंमरणाच्छ्रेयोजीवन्धर्ममवाप्नुयात् ॥ ६५ ॥
सोहंजीवितमाकांक्षन्नभक्ष्यस्यापिभक्षणम् ॥
व्यवस्येबुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥ ६६ ॥
बलवंतंकरिष्यामिप्रणोत्स्याम्यशुभानितु ॥
तपोभिर्विद्ययाचैवज्योतींषीवमहत्तमः ॥ ६७ ॥

श्वपचउवाच ॥

नैतत्खादन्प्राप्नुतेदीर्घमायुर्नैवप्राणान्नामृतस्येवतृप्तिः ॥
भिक्षामन्यांभिक्षमातेमनोस्तुश्वभक्षणेश्वाह्यभक्ष्योद्विजानाम् ॥ ६८ ॥

विश्वामित्रउवाच ॥

नदुर्भिक्षेसुलभंमांसमन्यच्छ्वपाकमन्येनचमेस्तिवित्तम् ॥ क्षुधार्तश्चाहमगतिर्निराशःश्वमांसेचास्मिन्षड्रसान्साधुमन्ये ॥ ६९ ॥

श्वपचउवाच ॥

पंचपंचनखाभक्ष्याब्रह्मक्षत्रस्यवैविशः ॥
यथाशास्त्रंप्रमाणंतेमाऽभक्ष्येमानसंकृथाः ॥ ७० ॥

विश्वामित्रउवाच ॥

अगस्त्येनासुरोजग्धोवातापिःक्षुधितेनवै ॥
अहमापद्गतःक्षुत्तोभक्षयिष्येश्वजाघनीम् ॥ ७१ ॥

श्वपचउवाच ॥

भिक्षामन्यामाहरेतिनचकर्तुमिहार्हसि ॥
ननूनंकार्यमेतद्वैहरकामंश्वजाघनीम् ॥ ७२ ॥

विश्वामित्रउवाच ।

शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तसे ॥
परांमेध्याशनादेनां भक्ष्यांमन्ये श्वजाघनीम् ॥ ७३ ॥

श्वपचउवाच ॥

असतायत्समाचीर्णंनचधर्मःसनातनः ॥
नाकार्यमिहकार्यंवैमाछलेनाशुभंकृथाः ॥ ७४ ॥

विश्वामित्रउवाच ॥

नपातकंनावमतमृषिःसन्कर्तुमर्हति ॥

समौचश्वमृगौमन्येतस्माद्भोक्ष्येश्वजाघनीम् ॥ ७५ ॥

श्वपचउवाच ॥

यद्ब्राह्मणार्थेकृतमर्थितेननतेनर्षिणातदवस्थाधिकारे ॥
सवैधर्मोयत्रनपापमस्तिसर्वैरुपायैर्गुरवोहिरक्ष्याः ॥७६॥

विश्वामित्रउवाच ॥

मित्रंचमेब्राह्मणस्यायमात्माप्रियश्चमेपूज्यतमश्च लोके ॥ तंभर्तुकामोहमिमांजिहीर्षेनृशंसानामीदृशानांनबिभ्ये ॥ ७७ ॥

श्वपचउवाच ॥

कामंनराजीवितंसंत्यजंतिनचाभक्ष्येक्वचित्कुर्वंति बुद्धिम् ॥ सर्वान्कामान्प्राप्नुवंतीहविद्वान्प्रियस्व कामंसहितःक्षुधैव ॥ ७८ ॥

विश्वामित्रउवाच ॥

स्थानेभवेत्सयशःप्रेत्यभावेनिःसंशयःकर्मणांवैविनाशः ॥ अहंपुनर्व्रतनित्यःशमात्मामूलंरक्ष्यंभक्षयिष्याम्यभक्ष्यम् ॥ ७९ ॥

बुद्ध्यात्मकेव्यक्तमस्तीतिपुण्यंमोहात्मकेयत्रयथाश्वभक्ष्ये ॥ यद्यप्येतत्संशयात्माचरामिनाहंभविष्यामि यथात्वमेव ॥ ८० ॥

श्वपचउवाच ॥

गोपनीयामिदंदुःखमितिमेनिश्चितामतिः ॥

दुष्कृतोऽब्राह्मणःसत्रंयस्त्वामहमुपालभे ॥ ८१ ॥

विश्वामित्रउवाच ॥

पिबंत्येवोदकंगावोमंडूकेषुरुवत्स्वपि ॥
नतेधिकारोधर्मेस्तिमाभूरात्मप्रशंसकः ॥ ८२ ॥

श्वपचउवाच ॥

सुहृद्भूत्वानुशासेत्वांकृपाहित्वयिमेद्विज ॥
यदिदंश्रेयआधत्स्वमालोभात्पातकंकृथाः ॥८३॥

विश्वामित्र उवाच ॥

सुहृन्मेत्वंसुखेप्सुश्चेदापदोमांसमुद्धर ॥
जानेहंधर्मतोत्मानंशौनीमुत्सृजजाघनीम् ॥ ८४ ॥

श्वपचउवाच ॥

नैवोत्सहेभवतोदातुमेतांनोपेक्षितुंह्रियमाणंस्वमन्नम् ॥
उभौस्यावःपापलोकावलिप्तौदाताचाहंब्राह्मणस्त्वं प्रतीच्छन् ॥ ८५ ॥

विश्वामित्रउवाच ॥

अद्याहमेतद्वृजिनंकर्मकृत्वाजीवंश्चारिष्यामिमहापवित्रम् ॥
सपूतात्माधर्ममेवाभिपत्स्येयदेतयोर्गुरुतद्वैब्रवीहि ॥८६॥

श्वपचउवाच ॥

आत्मैवसाक्षीकुलधर्मकृत्येत्वमेवजानासियदत्रदुष्कृतम् ॥ योह्याद्रियाद्भक्ष्यमितिश्वमांसंमन्येनतस्यास्तिविवर्जनीयम् ॥ ८७ ॥

विश्वामित्रउवाच ॥

उपादानेखादनेचास्तिदोषःकार्येंत्यायेनित्यमत्रापवादः ॥ यस्मिन्हिंसानानृतंवाच्यलेशोभक्ष्यक्रिया यत्रनतद्गरीयः ॥ ८८ ॥

श्वपचउवाच ॥

यद्येषहेतुस्तवखादनेस्यान्नतेवेदःकारणंनार्यधर्मः ॥
तस्माद्भक्ष्येभक्षणेवाद्विजेंद्रदोषंनपश्यामियथेदमत्र ॥८९॥

विश्वामित्रउवाच ॥

नैवातिपापंभक्षमाणस्यदृष्टंसुरांतुपीत्वापततीतिशब्दः ॥ अन्योन्यकार्याणियथातथैवनपापमात्रेणकृतंहिनास्ति ॥ ९० ॥

श्वपचउवाच ॥

अस्थानतोहीनतःकुत्सिताद्वाताद्विद्वांसंबाधतेसाधुवृत्तम् ॥ श्वानंपुनर्योलभतेऽभिषंगात्तेनापिदंडःसहितव्यएव ॥ ९१ ॥

भीष्मउवाच ॥

एवमुक्त्वानिववृतेमातंगःकौशिकंतदा ॥
विश्वामित्रोजहारैवकृतबुद्धिःश्वजाघनीम् ॥ ९२ ॥
ततोजग्राहसश्वांगंजीवितार्थीमहामुनिः ॥
सदारस्तामुपाहृत्यवनेभोक्तुमियेषसः ॥ ९३ ॥

अथास्यबुद्धिरभवद्विधिनाहंश्वजाघनीम् ॥
भक्षयामियथाकामंपूर्वंसंतर्प्यदेवताः ॥ ९४ ॥
ततोग्निमुपसंहृत्यब्राह्मेणविधिनामुनिः ॥
ऐंद्राग्नेयेनविधिनाचरुंश्रपयतस्वयम् ॥ ९५ ॥
ततःसमारभत्कर्मदैवंपित्र्यंचभारत ॥
आहूयदेवानिंद्रादीन्भागंभागंविधिक्रमात् ॥९६॥
एतस्मिन्नेवकालेतुप्रववर्षसवासवः ॥
संजीवयन्प्रजाःसर्वाजनयामासचौषधीः ॥ ९७ ॥
विश्वामित्रोपिभगवांस्तपसादग्धकिल्बिषः ॥
कालेनमहतासिद्धिमवापपरमाद्भुताम् ॥ ९८ ॥
ससंहृत्यचतत्कर्मअनास्वाद्यचतद्धविः ॥
तोषयामासदेवांश्चपितॄंश्चाद्विजसत्तमः ॥ ९९ ॥
एवंविद्वानदीनात्माव्यसनस्थोजिजीविषुः ॥
सर्वोपायैरुपायज्ञोदीनमात्मानमुद्धरेत् ॥ १०० ॥
एतांबुद्धिंसमास्थायजीवितव्यंसदाभवेत् ॥
जीवन्पुण्यमवाप्नोतिपुरुषोभद्रमश्नुते ॥ १०१ ॥
तस्मात्कौंतेयविदुषाधर्माधर्मविनिश्चये ॥
बुद्धिमास्थायलोकेस्मिन्वर्तितव्यंकृतात्मना १०२॥

---

इति श्रीमहाभारतेशांतिपर्वणिआपद्धर्मपर्वणि विश्वामित्रश्वपचसंवादेएकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥ ॥छ॥

अत एव "पाद्यमाचमनीयं च सर्वं प्रादाद्यथाविधि । तामुवाच ततो रामः श्रमणीं ( णां ) धर्मसंस्थिताम् ।" इति ( श्रीमद्वाल्मीकिरामायणेऽरण्यकाण्डे ७४ सर्गे ७ श्लो० ) श्रीरामाय श्रमण्या पाद्याचमनादिदानप्रतिपादनं संगच्छते॥ न चायं श्रीराम आपदमनुप्राप्त इति कथमिति वाच्यम्। तत्राप्यापदः क्वचिदभ्युपगमात् । वस्तुतस्तस्यास्तपसा परिशुद्धत्वान्निर्दुष्टत्वज्ञानेन तत्स्वीकृतमित्यदोषः।अत एव "राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् " इति ( तत्रैव सर्गे १९ श्लो० ) उक्तं संगच्छते ॥ तदाह (मनुः १० ध्या १०४श्लो०) "जीवितात्ययमापन्नो योन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते " इति ॥ न चैवमापत्काले शूद्रान्नभोजने प्रायश्चित्तमेव न स्यादिति वाच्यम् । "आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि। मनस्तापेन शुध्येत द्रुपदां[1] वा शतं जपेत् " इति ( पराशरेण ११ध्या २१ श्लो० ) उक्तप्रायश्चित्तानुष्ठानेन तस्यापनोद्य[2]त्वात्॥ न चैवं शूद्रान्नभोजने लघुप्रायश्चित्तं तज्जलपाने तु गुरु प्रायश्चित्तं " शूद्रहस्तेन यो भुङ्क्ते पानीयं वा पिबेत्क-

( १ ) "द्रुपदादिवमुमुचान" इति गायत्रीछन्दसं शतकृत्वोजपेदित्यर्थ इति ( अत्र माधवीये ) ( २ ) तत्फलादिभक्षणजनपापस्य ।

चित्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति" इति (मिताक्षरायां३ ध्या० २९०श्लो० व्या० क्रतुना )उक्तमयुक्तमिति वाच्यम्॥ तदभ्यासविषयकत्वात्तत्र "शूद्रगृहे" इत्युक्तेस्तद्गृहे स्वयमन्यस्वसजातीयद्वारा वा पक्का भोजने एव तथा न तु तत्कृतान्नभोजने इत्यभ्यनुज्ञानाच्च॥ अधिकमग्रे स्पष्टम्॥किं च जलविषयेपि प्रायश्चित्तं "यस्मिन्देशे तु यत्तोयं या च यत्रैव मृत्तिका।सैव तत्र प्रशस्तास्यात्तथा शौचं विधीयते" इति ( स्मृतिमु० फले० ह्निका० मनु०)"द्विविधा हि विद्या वेदपाठमात्रावसायिनी तदर्थज्ञानान्विताानुष्ठानपर्यन्ता चेति।तत्रानुष्ठानपर्यन्तमनुष्ठाताहिताग्निर्मनस्तापेन केवलवेदपाठीतुद्रुपदादिवमुमुचानइत्यृचंगायत्रीछन्दसंशतकृत्वोजपेत्" इति ( तत्रैव माधवीये)। न च मनस्तापस्य पापनाशकत्वे मानाभाव इति वाच्यम्॥ "ख्यापनेनानुतापेन तपसाध्ययनेन च। पापकृच्छुध्यते पापात्तथा दानेन चापदि" इति ( मनुना ११ ध्या०श्लो० २२८) अनुतापस्यापिपापनाशकत्वाभ्युपगमात्। अनुतापश्च "कृत्वा पापं हि सन्तप्य तस्मात्पापात्प्रमुच्यते। नैवं कुर्यांपुनरिति निवृत्त्या पूयते हि सः" इति ( मनुना ११ ध्या० २३१ श्लो०) उक्तो ज्ञेयः।

न चेदं मूत्रपुरीषशौचोपयोगिजलपरमिति वाच्यम्।

संकोचे प्रमाणाभावात् । तथैव लोकेनुभवाच्च । तत्तद्योग्य जलान्तरस्याल्पेनकालेन लाभसंभवे सङ्कोचस्य न्याय्यत्वाच्च । एतेन "सुराघटप्रपातोये पीत्वा नाव्यजलं तथा। अहोरात्रोषितो भूत्वा पञ्चगव्यं जलं पिबेत्" इति ( मिताक्षरायां ३ध्या० २९० श्लो० व्या ) उक्ते नाव्यजलपानं नयुक्तमित्यपास्तम् । वसिष्ठादिभिर्बहुभिर्नौकया चिरं बहुदूरं सञ्चारात्तत्र जलस्य नाव्यातिरिक्तस्य तत्रासंभवेन तेनैव तत्र स्नानसन्ध्यापूजापाकशौचादेरनुष्ठेयत्वस्य वर्णनीयत्वाच्च । "आपोमयः प्राणाः" इति ( छान्दोग्ये ) उक्तेर्जलस्योच्छ्वासनिःश्वासादेरम्मयत्वमब्रूपत्वं देहरक्षकत्वेनेति तादर्थ्यात् । तद्रक्षणं "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति ( वेदान्तदर्शने २ । ४ । २८ । ) सूत्रेण प्राणात्यये सर्वान्नानुमतौ तदन्नस्य तज्जलमन्तरा निष्पत्त्यसम्भवात्तदनुमतिलाभाच्च । अत एव "देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि । रक्षेदेव स्वदेहानि पश्चाद्धर्मं समाचरेत् ॥ ३६ ॥ येन कन च धर्मेण मृदुना दारुणेन वा।उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्॥३७॥ आपत्कालेसमुत्तीर्णेशौचाचारंतुचिन्तयेत्। शुद्धिं समुद्धरेत्पश्चात्स्वस्थो धर्मं समाचरेत् ॥३८॥" इति ( पराशरेण ७ध्या० ) साक्षादेव प्रवासे स्वदेहापायानापादनमेव धर्मः

पश्चात्त्वाचारप्रायश्चित्तकाण्डोक्तो धर्म आचरणीय इति कण्ठरवेणैव प्रतिपादनं संगच्छते । ( अत्रैव टीकायां माधवाचार्योपि ) –( प्रवासः ) तीर्थयात्रादौ परगृहाद्यव-स्थानं ( व्यसनानि ) स्वामिकार्यजनितानि। एतेषु प्राप्तेषु श्रद्धाजाड्येन शुद्ध्यशुद्धी न विचारयितव्ये। किन्तर्हि शुचिभिरशुचिभिर्वा द्रव्यैरात्मपुत्रकलत्रादीनां यथा रक्षा भवति तथा कृत्वा शान्तायामापदि पश्चाद्द्रव्यशुद्ध्यादिरूपं शास्त्रोक्तं धर्ममाचरेत् ॥ ३६ ॥ ×द्रव्यशुध्यादिसंपादितो-धर्मो ( मृदुः ) तद्विरहितो धर्मो ( दारुणः ) स्तन्यपान-मांसभक्षणादि तयोर्मध्ये येन केनापि व्याध्यादिभिर्दीनमा-त्मानमापद्ग्रच उद्धृत्य ( समर्थः ) व्याध्यादिरहितो यथा-शास्त्रं धर्ममाचरेत् ॥३८॥ शौचाचारमित्यनेन प्रथमका-ण्डोक्तो धर्मःपरामृष्टः। शुद्धिमित्यनेन प्रायश्चित्तकाण्डोक्तो धर्मो निर्दिष्टः । शुद्धो यथा भवति तथा पापात्समुद्धरे-दित्यर्थः। स्वस्थ इत्युपसंहारः । उक्तं द्विविधमपि धर्मं स्वस्थ एव समाचरेन्न त्वापन्नः । तदाह ( याज्ञवल्क्यः ३ ध्या ३९ श्लो० )–" क्षात्रेण कर्मणा जीवेद्विशां वा ह्यापदि द्विजः । निस्तीर्यतामथात्मानं पावयित्वा न्यसेत्सुधीः" इति ( तत्रैव माधवीये ७ ध्याये) स्पष्टी-कृतोयमेवार्थः। तत्र "शुद्धो यथा भवति तथा पापात्स-

मुद्धरेत्” इत्युक्त्या प्रायश्चित्तेन शुद्धिः संपादनीयेति पापादिति शब्देन बोधितं भवति ।

इदं तु चिन्त्यम् । मृदुना दारुणेन वा धर्मेणेत्यनेन प्रवासादौ स एव धर्म इति स्पष्टमुक्त्या मूलविरुद्धत्वात् । न च पश्चाद्धर्ममित्यनेन तस्याधर्मत्वं बोध्यत इति वाच्यम् । आपद्धर्मा एते पश्चादापन्निवृत्युत्तरंत्वन्ये एव धर्मा इत्यर्थकत्वात् । न च शुद्धिं समुद्धरेत्पश्चादित्युक्तेरयमधर्मोऽशुद्धत्वादिति ज्ञायत इति वाच्यम् । कूपे पतितं घटं समुद्धरेदितिवदेतदापत्प्राप्तिपूर्वकालेनुष्ठीयमानां शुद्धिं समुद्धरेत्सम्यगूर्ध्वमन्यूनानतिरिक्तरूपेणापत्कालिकं किञ्चिदसंयोज्य प्राक्कालिकं किञ्चिदपि न्यूनमकृत्वोर्ध्वमापत्कालापेक्षयोर्ध्वकालेनन्तरकाले स्वीकुर्यादित्यर्थेन सर्वेषां स्वरसतउपपत्तेः । सर्वत्र समुद्धरणस्यायमेवार्थस्सर्वैरप्यभ्युपगतोनान्यथा । न च याज्ञवल्क्योक्तिविरोधः । तत्र “पावयित्वान्यसेत्सुधीः”इत्युक्तेरिति वाच्यम् । “कलौ पाराशराः स्मृताः” इति ( पराशरेण १ध्याये २३श्लो० )क्तेःविरुद्धविषये पराशरोक्तस्यैवानुष्ठयते त्यभ्युपगमात् । वाणिज्यवृत्त्या जीवनं कार्यमित्युक्तेस्तत्र ऋणादानपरिवर्तनस्य ऋणत्वेन वस्तुदानधनप्रयोगादीनां नियतत्वात्तच्छोधनमन्तराप्राग्वात्स्थित्ययोग

इति याज्ञवल्क्योक्तेराशयाच्च। अत एव ऋणशुद्ध एव सर्वतः शुद्ध इति तस्मान्नीचवृत्तेस्त्यागोयुक्त इति उच्यते। अतएव "आपद्गतः संप्रगृह्णन्भुञ्जानो वाग्य तस्ततः। न लिप्यैतैनसा विप्रो ज्वलनार्कसमो हि सः" इति ( याज्ञवल्क्येन ३ ध्या० ४१ श्लो० आपद्धर्मे ) "यस्त्वधनोवसन्नकुटुम्बतयापद्गतोपि क्षत्रवृत्तिंवैश्यवृत्तिंवानप्रतिविवक्षति स यतस्ततो हीनतरहीनतमेभ्यः प्रतिगृह्णंस्तदन्नं भुञ्जानोपि नैनसा पापेन लिप्यते।" इति ( तत्रैवयोगीश्वरेण ) व्याख्यातं चोपपद्यते। त्रैवर्णिकविषयकत्वेन संकोचोभारताद्युक्तार्थविरोधान्नयुक्तः। न च "वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्माश्रयाद्विप्रः सद्यः पतति जातितः" इति (मनुना १० ध्या० ९७ श्लो०) उक्तेरिदमयुक्तमिति वाच्यम्। आपद्व्यतिरिक्तविषयत्वात्। एतेन "एवंचवदताऽपद्गतस्य परधर्माश्रयणाद्विगुणमपि स्वधर्मानुष्ठानंमुख्यमिति दर्शितं भवति" इति ( तत्रैव ) योगीश्वरोक्तमपास्तम्॥

न च "कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा। नाचरेत्तानि धर्मात्मा श्रुत्वाचापि न कुत्सयेत्" इति ( दत्तकमीमांसाया व्याख्याने ) वचनेन धर्मशास्त्रोक्तमे-

वानुष्ठेयमस्माभिर्न ऋषिदेवताचरणमिति तदनुष्ठानं निषिध्यत इति वाच्यम् । धर्मशास्त्रस्य विशेषणप्रवृत्ते-स्तत्रनिषिद्धानांविहितानां वा विषयेस्वेच्छयातिक्रमणस्य स्वस्थविषयेन युक्तत्वेप्यापद्गतस्यतदतिक्रमेप्रत्यवायोने-त्यर्थस्य प्रागुक्तपराशरवचनेन बोधितस्यतदतिक्रमणादि रूपस्यविषयविभागार्थत्वेनास्मदुपयोगार्थत्वस्य ऋषिदेव ताऽव्यवहारेष्ववश्यंनिरूपणीयत्वात् ।

यद्वा शक्तौ गांगजलं संगृह्य प्रत्यहंतत्पानादिना शालिग्रामतीर्थप्राशनेन च सर्वस्यापि महतोतिमहतो-ल्पस्यात्यल्पस्य च दोषस्य नाशेनोक्तापत्त्यनवकाशात्। तदुक्तं ( स्मृतिमुक्ताफले आह्निककाण्डे विष्णुपुराणे ) "नदीनदतटाकेषु देवखातजलेषु च । भूमिष्ठमुद्धृता-त्पुण्यं ततः प्रस्रवणोदकम् । ततोपि सागरं पुण्यं तस्मा-न्नादेयमुच्यते । तीर्थतोयं ततः पुण्यं गांगं पुण्यं तु सर्वतः ।" इति । ( तीर्थतोयम् ) ऋषिजुष्टजलम् । ( तत्रैव विष्णुरपि ) "सर्वत एव गाङ्गम्" इति । ( तत्रैव विव-स्वानपि ) "एकतस्सर्वतीर्थानि जाह्नवी चैव चान्यतः" इति । ( तत्रैवमरीचिरपि ) "गांगं पयः पुनात्याशु पाप-मामरणान्तिकम्" इति ।

अत एव गङ्गाया मुक्तिपतितोद्धारसम्पादकत्वम् ।

कलुषचित्तानांपापद्रव्यरतात्मनाम् ।विधिहीनक्रि-
च गतिर्गङ्गां विना न हि।सैवेह शरणं गंगा पतित-
ोद्यता । संसारार्णवमग्नानांभूतानां शरणार्थिनाम् ।
शरणदः कश्चिदुपायो विद्यते क्वचित् । विना
र्ममयीं शरण्यां सर्वदेहिनाम् । महापातकसंह-
र्वाभीष्टार्थसाधिकाम् । अनाश्रित्य तु वै गंगां
च्छति यः कलौ । सूर्यं द्रष्टुमिवोद्युक्तो जात्य-
शस्तु सः" इति (भविष्ये)॥ नच "दशवर्ष-
णे विष्णुस्तिष्ठति मेदिनीम् । तदर्धं जाह्नवीतोयं
ग्रामदेवताः ।" इति (क्वचित्) तदपगमकथा
इतीदानीं गंगाभावात्कथं प्रकृते तदुपयोग इति
॥ "अन्तिमे कलौ"इति (वराहपुराणे) उक्तेर-
लावेव तदभावस्य सम्भवेन प्रकृतेदोषाभावात् ।
तस्या गमनस्य कुत्राप्यनुक्तेश्चेतिदिक्। तथा"स
सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । शालग्रामशिला-
भिषेकं समाचरेत् । गंगागोदावरीरेवानद्यो मुक्ति-
याः । तावत्सन्तीह सर्वत्र शालग्रामशिलाजले"
पाद्मे ) तत्तीर्थमहिमा वर्ण्यते । तथा "देहःशुध्य-
यात्मा पीत्वा पादोदकं हरेः । नित्ये नैमित्तिके

काम्येपीत्वा भुक्त्वा न दुष्यति ।" इति ( स्मृत्यर्थसारे ) "पादोदकं पिबेन्नित्यं नैवेद्यं भक्षयेद्धरेः। शेषं च मस्तके धार्यमिति वेदानुशासनम् । शालग्रामशिलातोयमपीत्वा यस्तु मस्तके । प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते । शालग्रामशिलातोयं पिबेद्वामकरेण तु । अज्ञानादैन्दवं प्रोक्तं ज्ञानादब्दं समाचरेत् । विष्णोः पादोदकं पीत्वा कोटिजन्माघनाशनम् । तदेवाष्टगुणं पापं भूमौ बिन्दुनिपातनात्" इति (गारुडे) तत्फलानि वर्णितानि । एवं च गंगाशालग्रामतीर्थप्राशनंतत्र संभावितनानादोषनाशात्॥ एतेन समुद्रे नावा याने समुद्रस्पर्शस्यापि "अश्वत्थसागरौसेव्यौ न स्पृष्टव्योमहोदधिः। अश्वत्थं मन्दवारे तु समुद्रं पर्वणिस्पृशेत् ।" इति ( निर्णयसिन्धौ १ मपरिच्छेदे ) निषिद्धत्वात्तन्नित्यं गृहीत्वा यन्त्रेण लवणांशनिष्कासनेन माधुर्यमुत्पाद्य पातुंशक्यतयाऽवतरणदिनावधियावदावश्यकं तावज्जलान्तरस्य पर्वादौ गृहीत समुद्रजलस्य वा निर्गमनदेशस्थनदीकूपादिजलस्य वा संग्रहेपि तस्य "सर्वं पर्युषितं तोयम् " इति पर्युषितदोषदूषितत्वोक्त्यानुपपत्तिरियं स्यादित्यपास्तम्॥ पर्युषित मित्युक्तेःजलान्तरसम्पादकस्थलान्तराविषयत्वात् ।

शक्तेन "सर्वं पर्युषितं तोयं गाङ्गं पर्युषितं न हि" इति "चान्द्रायणसहस्राच्च गङ्गांभःपानमुत्तमम्। गङ्गांमासं तु संसेव्य सर्वयज्ञफलं लभेत्" इति च (आग्नेयपुराणे ११०ध्या०३श्लो०) उक्तेर्गंगाजलसंग्रहे कृते तदुपपत्तेश्च। अशक्तेन तु पर्युषितजलपानदोषनिवृत्तयेपर्युषितपानप्रायश्चित्तस्य गङ्गाजलकणिकाप्राशनेनापनोदनीयत्वाच्चेतिप्रागेवोक्तेः ननु समुद्रेनौकया गन्तृभिः प्राप्तव्यदेशप्राप्त्यवधि यानि यान्यावश्यकानितानिसहैवनीयन्ताम्। तेनशूद्रान्न सम्बन्धोन भवतीतिचेत्॥ न॥ "अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्। अस्नेहा अपिगोधूमयवगोरसविक्रियाः।" इति (याज्ञवल्क्येन-१माध्या० श्लो०१६९) तथा "शाकं मांसमपूपं च सूपं कृसरमेव च॥ यवागूः पायसं चैव यच्चान्यत्स्नेहसंयुतम्। सर्वं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्" इति (तत्रैव यमेन) तथा "अपूपाश्च करंभाश्च धानावटकसक्तवः। शाकं मांसं फलं मूलं सूपं च कृसरं यवाः॥ पृथुकाः पायसं चैव पर्युष्यन्ति न तु क्वचित्।" इति तत्र (पराशरस्मृतावपि श्राद्धप्रकरणे भोजने वर्ज्यविषयव्यवस्थायां २ध्या०४४ श्लो०व्या) तथा "अपूपधानाकरम्भसक्तुयावकपायसशाकफलमूलानि विकृतानि वर्जयेत्" इति (वासिष्ठेन तत्रैव) तथा "शुक्तानि हि द्विजोन्नानि न भु-

श्नीत कदाचन॥प्रक्षालितानि निर्दोषाण्यापद्धर्मो यथा भवे-
त्" इति (पराशरेण तत्रैव यमेन ) उक्तेरदोषात्। अत्रोक्त
मपिमांसं त्याज्यमेव "वसेत्स नरके घोरेदिनानि पशुरोमभिः।
संमितानिदुराचारो यो हन्त्यविधिना पशून्" इति (याज्ञ-
वल्क्येन १ ध्या० १८० श्लो०) "यज्ञार्थंब्राह्मणैर्वध्याःप्रश-
स्तामृगपक्षिणः। भृत्यानांचैववृत्त्यर्थमगस्त्योह्याचरत्तथा"
इति (मिताक्ष० १ध्या० १७९ श्लो० व्या० मनुना २चोक्तेः।

एतेषां पदानामर्थाः—( पराशरेण ३ ध्या० ४४ श्लो०
व्या ) श्राद्धे वर्ज्यवस्तुनिरूपणे उक्ताबोध्याः—( अपूपाः )
यवगोधूमविकारा मण्डकादयः। व्रीह्यादिपिष्टविकाराश्च
(वटकाः)माषादिपिष्टमयाःप्रसिद्धाः। (कृसरं) घृष्टतिलचूर्ण
संयुतमोदनम् अन्यदोदनादिकं स्नेहसंयुतं घृतेन दध्या-
दिभिः पूरितमेतत्सर्वं पर्युषितमशुक्तं भोज्यम्॥ अत्यम्लं
( शुक्तम् ) इति( तत्रैव बृहस्पतिना )। अनम्लमीषदम्लंवा
यद्वस्तुकालान्तरेणद्रव्यान्तरसंसर्गेण वाऽत्यम्लं भवति
तत्=( शुक्तम् ) न स्वभावतोत्यम्लम्।( पर्युषितं )—यद
ग्निपक्वंसद्रात्र्यन्तरितं तत्।शुक्तादिप्रतिषेधो दध्यादिव्यति-
रिक्तविषयः।" घृतदधिपयस्तक्राणामाधारभाण्डे स्थिता-
नामदोषः।" घृतं तु पायसं क्षीरं तथैवेक्षुरसो गुडः। शूद्र-
भाण्डस्थितं तक्रं तथा मधु न दूष्यति" इति(पराशरमाधं-
वीये शङ्खेन ७८ श्लो०व्या०६ध्या ) उक्तेः। तत्रैव स्थिता

एते ग्राह्या एव । आधारदोषे तु नयेत्पात्रात्पात्रान्तरम्
तथा पणिकेष्वपि केचित्त्याज्याःकेचिन्न ।
"नापणीयं समश्नीयान्नाद्भिः पक्वम्" इति ( पराशरमाधवीये ३ध्या०४४श्लो०व्या०श्राद्धे वर्ज्यवस्तुप्रकरणे ) ।
स्मृत्यन्तेरे तु "अयमपूपादिव्यतिरिक्तविषयः" इत्युक्तम् ।
पण्येष्वपि भाण्डलेपाभावेग्राह्या एवापूपादयः।तदुक्तं स्मृतिरत्नाकरे ) "अपूपाः सक्तवो धानास्तथा दधि घृतं मधु ।
एतत्पण्येषुभोक्तव्यं भाण्डलेपो न चेद्भवेत् " इति ।

अत्रेदं चिन्तनीयम् । ब्राह्मणेर्ग्राह्याण्येतानि—"द्विविधो द्विजः शूद्रान्नरतः तन्निवृतश्च।तत्र यस्य "कन्दुपक्वं स्नेहपक्वं पायसं दधिसक्तवः । एतानि शूद्रान्नभुजो भोज्यानि मनुरब्रवीत् । द्विजैरेतानि भोज्यानि शूद्रगेहे कृतान्यपि।"इति ( शुद्धितत्त्वे कौर्मोत्तरार्धे ) इति ( अपरार्के शूलपाणौ हारीतस्य)उक्तेरिति । ( पायसं ) पाकं विना क्षीरेण कृतम् ।
"( आमं ) शूद्रस्य पक्वान्नम् पक्वमुच्छिष्टमुच्यते" इति ( शातातपेन ) उक्तेः । " यच्चान्यत्पयसा कृतम् " इति पूर्वमुक्तेरिदं शूद्रगृहेऽपि भोज्यम् । तदुक्तं ( शूलपाणौ ब्राह्मे )—" राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवाम् । वासोभूरत्नहेमान्नं सच्छूद्रस्य गृहे तथा" इति । "स्वदासो नापितो गोपः कुम्भकारः कृषीवलः।ब्राह्मणैरपि भोक्तव्याःपञ्चैते शूद्रयोनयः" इति

( १ ) पक्वं सर्वमित्यर्थः । अग्रिमग्रन्थसन्दर्भात् इतिभाति ।

( पराशरमाधवीये ११ ध्या २४ श्लो० )।अत्रान्नशब्दोऽद्-नीयवस्तुमात्रपरोनत्वोदनपरः । "दासनापितगोपाल-कुलमित्रार्धसीरिणः । एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्" इति ( पराशरेण ११ ध्याये २१ श्लो० ) "शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः । भोज्यान्ना नापि-तश्चैवं यश्चात्मानं निवेदयेत् ॥ " इति ( याज्ञवल्क्येन १ ध्याये १६६ श्लो० ) इति । अन्यस्य द्विजस्य तु ( शूलपाणावंगिराः )—" पात्रान्तरगतं ग्राह्यं शूद्रात्स्वगृ-हमागतम् । शूद्रवेश्मनि विप्रेण क्षीरं वा यदि वा दधि । निवृत्तेन न भोक्तव्यं शूद्रान्नं तदपि स्मृतम्" इति " सम्प्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागतम् " इति ( विष्णुपुराणे )। "तत्पाकश्च शूद्रगृहे न कार्यः । शुष्कान्नं गोरसं स्नेहं शुद्रवेश्मन आगतम् । पक्वं विप्रगृहे भुक्तं भोज्यं तन्मनुरब्रवीत् " इति ( पराशर-माधवीये कमलाकरस्य ) स्मरणात्" इति ( निर्णयसि-न्धुटीकायां नौकाख्यायां३परिच्छेदे)। यत्तु ( भविष्ये ) " उपक्षेपणधर्मेण शुद्रान्नं यः पचेद्द्विजः । अभोज्यं तद्भ-वेदन्नं स च विप्रः पुरोहितः । " ( उपक्षेपणं । ) शूद्रेण स्वान्नस्य पाकार्थं विप्रगृहे समर्पणमिति ( कल्पतरुः )। तच्छुश्रूषकाभिन्नपरम्। "त्रिषु वर्णेषु कर्तव्यं पक्वभोजन-

मेव च । शुश्रूषामभिपन्नानां शूद्राणां च वरानने ।" इति ( वाराहे ) उक्तेः। संसृष्टदुष्टभोज्येऽन्ने विशेषमाह (अपरार्के शुलपाणौ सुमन्तुः )–"गोरसं चैव सक्तूंश्च तैलं पिण्याकमेव च। अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् ।" इति । ( पयसा ) अन्यासंसृष्टदुग्धेन पाकं विना कृतम्। तेन पायसे दोष एव। पयसेतितृतीयया नैरपेक्ष्यावगतेः । शुद्रजले दोषोक्तेश्च । यच्चेति चकारादपूपेषु पयःकृतेष्वेव । तेन जलकृते पोलिकादौ दोष एवेत्यर्थः " इति स्वेनस्वेन सह नीतैः शूद्रादिभृत्यैः केषाञ्चिसहायः उक्त रीत्या स्यादेवेति दिक् ॥

एवंच भरतखण्डे स्थिताःशिष्टा स्तथाव्यवस्थापकास्तथान्येपि पण्डिताः पामराश्चत्रैवर्णिकाः यथाशक्ति तत्ताद्दिध्युल्लङ्घनजङ्घालाः क्वचिदशिरःस्नायिनो कलियुगसाधुरूपाः प्रायश्चितसहस्रविधीनामपवादशास्त्रभूतशिरस्स्नानापेयपानसहस्रपर्युषितभोजनापणिकाभक्ष्यान्नभक्षणब्रह्मचर्याग्निपरित्यागदुर्दानदुष्प्रतिग्रहसन्ध्यात्यागशिखाच्छेदसोपानत्कभोजननिषिद्धोच्छिष्टभोजनसङ्करवर्णपाङ्क्तिभोजनास्पृश्याशुद्धप्रेतादिकर्मकर्त्रास्तिकदूषणादिनित्यानाचारासक्तसेवनतदन्नप्रसादाद्याकाङ्क्षातदुद्देश्यकमहामन्त्राद्युपदेशस्वेच्छाधृतयज्ञोपवीतत्यागतद्धारणाद्यानियतानाचा-

रसहस्रां स्तानेतान्दुराचारान्परित्यज्यावश्यकानापत्कालिकाचाराङ्कचिदाश्रित्य प्रयन्तदेशादिगन्तॄणां न कापि क्षतिरिति दिक् ॥

इत्यब्धिनौयानमीमांसायां भक्ष्याभक्ष्यादिविचारनामकं तृतीयंखण्डं समाप्तम् ॥ ३ ॥

---

## अथ श्राद्धादिविचार आरभ्यते।

ननु समुद्रे नौयानेन देशान्तरगमने द्वीपान्तरगमनेवा "प्रणष्टाश्रमधर्माश्च वर्ज्या देशाः प्रयत्नतः" इति ( निर्णयसिन्धौ श्राद्धे वर्ज्यदेशप्रकरणे वायुपुराणे ) उक्तेर्वर्णाश्रमधर्मशून्यदेशानां परित्याज्यत्वोक्त्या तत्र परित्याज्ये कथं प्रवेशो युज्यते इति चेत्॥न॥अस्य वचनस्य श्राद्धप्रकरणस्थत्वेन श्राद्धं तत्र न कार्यं मित्यर्थप्रतीतेः। "कृष्णसारस्तु चरति मृगो यत्र स्वभावतः। स ज्ञेयो याज्ञियो देशो म्लेच्छदेशस्त्वतः परः॥ २३॥ एतान् द्विजातयो देशान्संश्रयेरन्प्रयत्नः। शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः" इति ( मनुना २ ध्या० २ श्लो० )वृत्तिकर्शित इत्युक्त्यात्र वृत्त्यन्तरं न लभ्यते।अतोत्र स्थातुं न शक्यते। तत्र यदि गम्यते तदा वृत्तिर्लभ्यते। ततश्च तत्रैव निवसामः पुनर्वृत्तिरहितदेशं न प्रत्यावर्तामह इत्यभिसन्धिना गन्तव्यमित्यर्थात्। "संश्रयेरन्प्रयत्नतः"

इत्युक्तेः। प्रयत्नेन संश्रयणस्य स्थिरवासस्य योग्योप देशलाभपर्यन्तमन्यस्य तदुपायान्वेषणायाश्रयणेपि तत्र तमुपायमुपलभ्य ततः प्रत्यावर्तनीयमेव न संश्रयणीय-मित्यर्थाच्च। अन्यत्र निवासे दोषाभाव इत्यर्थलाभाच्च। अत एव "वसन्वा यत्र कुत्रापि स्वाचारं न विसर्जयेत्" इत्युक्तं संगच्छते। अत एव शास्त्रनिषिद्धेपि भरतखण्डस्थे देशे निवसन्ति। अन्यथा "न शूद्रराजे निवसेन्नाधार्मिक जनावृते। न पाषण्डिगणाक्रान्ते नोपसृष्टेन्त्यजैर्नृभिः ॥ ६१ ॥" इति (मनुना ४ ध्या०) उक्तेः शूद्रस्वामि-कादिदेशे वासनिषेधात्तत्रेदानीं बहूनां श्रोत्रियाणां निवसन मयुक्तं स्यात्। किंच "म्लेच्छदेशे तथा रात्रौ सन्ध्यायां विप्रवर्जिते। न श्राद्धमाचरेद्विद्वान्न चाकाशे कदाचन" इति (दिवोदासीये) वचनान्म्लेच्छदेशे श्राद्धं निषिध्यते न तु गमनमपीत्यदोषात्। ननूक्तवचनेन म्लेच्छदेशे श्राद्ध कर्तव्यतानिषेधात् "भोजको यस्तु वै श्राद्धं न करोति खगाधिप॥ मातापितृभ्यां सततं वर्षेवर्षे मृतेहनि। स याति नरकं घोरं तामिस्रं नाम नामतः" इति (मदनरत्ने भविष्ये मनुना) श्राद्धस्याकरणे प्रत्यवायोक्तेः। "वसन्वा यत्र कुत्रापि स्वाचारं न विसर्जयेत्" इत्युक्तेः "श्राद्धे कुर्य्यान्न विस्तरम्" इत्युक्तेश्च विस्तरेण ब्राह्मणशून्यत्वा

दिनाऽनुपपत्तिमतिम्लेच्छदेशादौयथावच्छ्राद्धं न कुर्य्या दित्यर्थस्यैव युक्तत्वात्। किंच यद्यपि "त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम्। उत्तरेण महानद्या दक्षिणेन तु कीकटान्॥ देशस्त्रैशङ्कवो नाम श्राद्धकर्मणि वर्जितः।" इति (निर्णयसिन्धौ पृथ्वीचन्द्रोदये स्कान्दे) तथा "किरातेषु कलिङ्गेषु कोङ्कणेषु खसेष्वपि। सिन्धोरुत्तरकूलेषु नर्मदायाश्च दक्षिणे। पूर्वेण करतोयाया न देयं श्राद्धमुच्यते" इति (निर्णयसिन्धौ ब्राह्मे) "रूक्षंकृमिहतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्। देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि" इति (निर्णयसिन्धौयमेन) च निर्दिष्ट देशेषु श्राद्धं निषिध्यते। तथापि "इदं काम्यविषयम्। अन्यथा तत्रत्यानां सर्वश्राद्धलोपप्रसङ्गात्" इति (निर्णयसिन्धौ तत्रैव, उक्तनित्यस्य परित्यक्तुमशक्यत्वेनकाम्यश्राद्धं न कार्यमित्यर्थकल्पनाया एव युक्तत्वात्।

किंच रोगादिनाऽशौचादिना राजकार्यनियुक्तेन कारागृहनिवासिना बालेनेत्येवमनुपपत्तिषु प्रतिनिधिद्वारा स्वदेशेश्राद्धाचरणेन तद्दोषाभावात्।

अपरं च "द्रव्याभावे द्विजाभावे अन्नमात्रं तु पाचयेत्। पैतृकेन तु सूक्तेन होमं कुर्याद्विचक्षणः" इति (निर्णयसिन्धौ पृथ्वीचन्द्रोदये बृहन्नारदीये) तथा "पिण्डमात्रं प्रदातव्य-

मभावेद्द्रव्यविप्रयोः । श्राद्धीयाहनि संप्राप्ते भवेन्निरशनोपि वा" इति ( तत्रैव देवलेन ) तथा "किञ्चिद्द्द्यादशक्तस्तु उदकुम्भादिकं द्विजे । तृणानि वा गवे दद्यात्पिण्डान्वाप्यथ निर्वपेत् ॥ तिलदर्भैः पितॄन्वापि तर्पयेत्स्नानपूर्वकम्" इति ( तत्रैव वृद्धवसिष्ठेन ) तथा "अग्निना वा दहेत्कक्षं श्राद्धकाले समागते । तस्मिन्वोपवसेदह्नि जपेद्वा श्राद्ध-संहिताम् ।" इति ( हेमाद्रौ भविष्ये ) इति श्राद्धस्य साक्षाद्यथाविधि विप्रादिवर्जितत्वादिना प्रायस्सर्वेषांकर्तु-मशक्यत्वेन तन्निषेधेपि तत्प्रत्याम्नायभूतोपायान्तराणां सुकरत्वेन तदनुपपत्त्यभावादिति दिक् ॥

ननु समुद्रे नौयानेन गमनसमये मातापितृमृतिश्रवणे तत्र तदौर्ध्वदैहिकं भुवीव कर्तुमशक्यम् । ततश्चैतज्जन्मनि जन्मान्तरे वा कृतेन पुण्यविशेषेण पुत्रमुपलभ्य तन्निमित्तं बहून्क्लेशाननुभूय नानाक्लेशेन तत्तोषं बहुधनस्य व्ययेन तत्संस्कारतदंश दानादिना यावज्जीवं तस्मादन्त्येष्टि प्रभृति प्रत्युपकारप्राप्तये उपकुर्वतो पित्रोः यद्ययं प्रत्युप-कृतिं न कुर्यात्तदा कृतज्ञताभङ्गात् "पुन्नाम्नो नरकात्त्राता

(१) (श्राद्धसंहितां) समन्त्रकश्राद्धसंकल्पः इति (निर्णयसिन्धौ)। "समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् । अपि संकल्पविधिना काले तस्य विधीयते । पात्रे भोज्यस्य चान्नस्य त्यागः सङ्कल्प उच्यते" इति ( तत्रैव हेमाद्रौ संवर्तेन ) उक्तः संकल्पः ।

पुत्रः” इत्युक्तलक्षणपुत्रत्वभङ्गाच्च । अत एवौरसाभावे दत्तकं स्वीकुर्वन्तीति चेत् ॥ न ॥ कालान्तरे कर्त्तुमशक्यानां सन्ध्याखण्डोक्तप्रकारेण नौकाकल्पिते भूप्रदेशे दहनसञ्चयनावशिष्टानां कर्मणां सहायसामग्रीसम्पत्तिसद्भावे कर्त्तुं शक्यत्वात् । यदि सहायादिन्यूनता तदा भुवि तन्न्यूनतायां यथा तथैव गतिः स्यात् ॥ एतेन दाहसञ्चयव्यतिरिक्तमौर्ध्वदैहिकं तत्र दुःशकम् । यतः “नैकवासा न च द्वीपे नान्तरिक्षे कदाचन । श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्” इत्युक्तेरित्यपास्तम् । रोगाद्युपघातादाविव नौगमनसमयेपि स्वदेशस्थेन येन केन वा स्वीयेन प्रतिनिधिना तच्छ्राद्धादिनिष्पादनेनादोषाच्च ॥ नावोऽवतीर्योक्तप्रायश्चित्तमनुष्ठाय तत्कृत्यकरणे दोषाभावाच्च ॥ ननु द्वीपत्वप्रयोज्यदोष इति चेदस्यापि द्वीपत्वमस्त्यवेति तद्वचनस्य नद्यादिमध्ये जलप्रवाहेत्यल्पे यो द्वीपस्तत्र न कुर्यादित्यर्थात् । यतः कदाचित्तत्र प्रवाहापाते चिरकाल बहायाससाध्यश्राद्धभङ्गाऽऽत्महत्यादिप्रसङ्गादिदोषबाहुल्यम् ॥ नच नावासमुद्रतरणसमये स्वस्याशुद्धत्वात्प्रायश्चित्तं विना पतितवन्नित्यकर्मातिरिक्तकर्मानुष्ठानयोग्यताया अभावात्तद्दुःशकमिति वाच्यम् । तत्रैव प्रायश्चित्तमनुष्ठाय शुद्धिं संपाद्य तत्करणेनादोषात् ॥ नच

"चतुर्थकालेंमितभोजिनःस्युरपोऽभ्युपेयुस्सवनानुकल्पम्। स्थानासनाभ्यां विहरन्त एते त्रिभिर्वर्षैस्तदपहन्ति पापम्" इति बोधायनोक्तस्य प्रायश्चित्तस्य त्रैवार्षिकत्वात्तावत्तदनुष्ठानोत्तरं शुद्धिस्तत और्ध्वदैहिककर्मकर्तव्यता प्राप्नोतीति वाच्यम् ॥ यानानन्तरं ततोऽवतीर्णस्यैव प्रायश्चित्तम्। तत्रैव स्थितस्य तु न प्रायश्चित्तं विहितमितिनौकायांप्रायश्चित्तस्याप्राप्तेः ॥ प्रायश्चित्तविधेःकर्तव्यमहाभहाश्रौतस्मार्तकर्मलोपनैयत्यमिति तत्प्रयोज्यप्रत्यवायपरिहारायैव प्रवृत्तिर्नान्यत्रेत्येवक्तुंशक्यत्वाच्च।कर्मलोपप्रत्यवायपरिहारायप्रवृत्तिरित्यभ्युपगमस्यान्याय्यत्वाच्च। प्रकारान्तरंतुप्रागुक्तमेव।तत्प्रायश्चित्तस्य चिरकालाभ्यस्तनौयानयातृविषयत्वाच्च॥ "विवाहदुर्गयज्ञेषुयात्रायां तीर्थकर्मणि।न तत्र सूतकंतद्वत्कर्मयज्ञादि कारयेत्" इति(निर्णयसिन्धौ पैठीनसिनः)उक्तमातापितृव्यतिरिक्तविषयकत्वेन नौकावतरणोत्तरमेवाशौचानुष्ठानापितृयज्ञकर्तव्यताभ्युपगमेन वा दोषाभावाच्च ॥ प्रकारान्तरं चात्रोपयुक्तं प्रथमखण्डेउक्तं न विस्मर्तव्यम्।

ननु तत्र गमने कस्यचिन्मरणे दहनादि न स्यात्। तस्य तत्र कर्तुमशक्यत्वात्। नच द्वीपान्तरीय भूलाभपर्यन्तं दशरथादिप्रेतस्थापनवत्तैलद्रोण्यां प्रेतं संस्थाप्य भूलाभोत्तरमवतीर्य दाहकरणेनादोष इति

वाच्यम् ॥ शक्तेन तथा कर्तुं शक्यत्वेप्यन्येषामशक्यत्वात् । प्रेतं संस्थाप्य तत्र तदीयैरन्यैश्च स्नानभोजनादिव्यवहारः कर्तुमशक्य इति तु न॥त्रैवर्णिकेषु कलौ तथा व्यवहारस्यादर्शनेपि त्रेतायां रामराज्यकालेऽन्येषां तत्पूर्वं दशरथस्य चेत्येवं प्रेतानां बहूनां क्वचिदेकत्र संरक्ष्यानन्तरं संस्कारःकृत इत्यादिसदाचारस्य (वाल्मीकिरामायणे आनन्दरामायणे ) च स्पष्टमुक्तत्वात्ग्रन्थविस्तरभयात्तुन लिख्यते।इदानीमपि रात्रौमृते पुत्राद्यागमनपर्यन्तं प्रतीक्षणात्क्वचिद्दिवाङ्गलवैद्यशालायां मृतस्य केनापि हतस्य द्वित्रिदिवसोत्तरंसंस्कारस्य पर्युषितप्रायश्चित्तमनुष्ठायानुष्ठानाच्चक्वचिदस्त्येवसः । नन्वत्रानुपपत्त्या तथा व्यवहार इति चेत्॥प्रकृतेपि सममेव॥ कालाल्पत्वमहत्वादिकमनुपपत्ति बलाधीनमिति चेत्।न॥आतुरसन्न्यासं दापयित्वा मृतेरनन्तरंसमुद्रतीर्थे प्रक्षेपेणादोषात् ।माधवस्तु—"ब्राह्मणः क्षत्रियो वाथ वैश्योवाप्रव्रजेद्गृहात्" इति (कौर्मे)उक्तेर्वर्णत्रयस्याप्यधिकार" इति(निर्णयसिन्धौ तृतीयपरिच्छेदेसन्न्यासप्रकरणे) त्रैवर्णिकानां सर्वेषामपि सन्न्यासाधिकारमाह । नच तस्य सन्न्यासिनः कदाचिदुज्जीवने का गतिः । "यानारूढं यतिं दृष्ट्वा सचैलं स्नानमाचरेत् " इति वचनेन तत्र नौकायां तद्दर्शनस्य निषिद्धत्वादिति वाच्यम् ॥ स्वयं तत्र नावि

सन्न्यासोत्तरमारोहाकरणेन स्वेच्छयानौकाढयातिविषयत्वात् ॥ न चास्याशुद्धत्वेन सन्न्यासग्रहणेऽन्येषां तद्दाने च नाधिकार इति वाच्यम् ॥ "शरीरस्यात्यये प्राप्ते वदन्ति नियमांस्तु ये । महत्कार्योपरोधेन तत्पापं तेषु गच्छति ।" इति "तथा दुर्बलेनुग्रहः प्रोक्तस्तथा वै बालवृद्धयोः। ततोन्यथा भवेद्दोषस्तस्मान्नानुग्रहः स्मृतः" इति "ब्राह्मणा जङ्गमं तीर्थं तीर्थभूता हि साधवः । तेषां वाक्योदकेनैव शुध्यन्ति मलिना जनाः" इति ( स्मृतिमुक्ताफले श्राद्धकाण्डे पराशरेण) "तुलसीदलसंमिश्रमपि सर्षपमात्रकम्। गङ्गाजलं पुनात्येव कुलानामेकविंशतिम्" इति ( तत्रैव नारदेन ) नियमाद्यभावेऽपि ब्राह्मणवाक्येन गङ्गाजलेन हरिशिवास्मिरणेन च म्रियमाणस्य शुद्धत्वसंभवात् । मृतस्य प्रेतस्य समुद्रतीर्थे परित्यागमन्तरा गत्यन्तराभावात्तत्रत्यागेन्यत्रावतीर्य पलाशविधिमाश्रित्यविहितकृत्यस्य तत्र करणेनादोषाच्च । एतेन पुंसांसंन्यासेलभ्येपि स्त्रीप्रेतानां का गतिः।तत्र तीर्थे प्रक्षेपे विध्यभावादिति परास्तम्॥प्रेतं जले परित्यज्य भारते देशान्तरे विद्यमानप्रतिनिधिना स्वस्वातुरावस्थायामिव पलाशविधिना तदानीमेव विशिष्टकर्मानिष्पत्तेश्चेत्यलंपल्लवितेन॥

शिष्टं भुवीव विज्ञेयं श्राद्धकृत्यं ततोऽधिकम् ।
नैवेत्यतथावश्यकं यत्तदेव समुदाहृतम् ॥ १ ॥

इत्यब्धिनौयानमीमांसायां श्राद्धादिविचारनामकं चतुर्थं खण्डं समाप्तम् ॥ ४ ॥

## अथाब्धिनौयानमीमांसायां शिष्टाब्धिनौयानाख्यं पञ्चमं खण्डमारभ्यते ।

एतावतात्र पक्षसाध्यहेतवो निरूपिताः । अथ दृष्टान्त आरभ्यते "धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥ द्वितीयं धर्मशास्त्रं तु तृतीयं लोकसंग्रहः" इति वचनानुसारेण श्रुतिस्मृतिलोकव्यवहाराच्च न दोषः समुद्रयाने नावेतिसिध्यति । कलौ बहवः समुद्रे नौयानं द्विजाश्चक्रुरेव । कलिवर्ज्यस्याचरणेनाशुद्धास्ते इति तत्त्यागकथेतिहासादौकुत्राप्येतदवधि नश्रूयते केष्वपि ग्रन्थेषु । यद्यपि निषेधस्य नित्यकर्मलोपादिकमसत्सं सर्गादिकं वा भवतीति तात्पर्यं वर्णनीयम् येन प्रायश्चित्तबाहुल्यापत्त्याविधिवत्प्रायाश्चित्तासंभवेन दुरुद्धरं पातित्यं स्यादित्यनुमीयते ॥ तथापि नित्यकर्मादिकमसत्संसर्गादिसमभिव्याहाराभावं च संपाद्य यथा तत्रगच्छतां न सदोष इति सर्वकलिवर्ज्ये

ष्वपि क्वचित्क्वचित्कल्प्यमानविशेषानुसारात्केषु चि न्निषेधाप्रसरः। यथा मातुलकन्यापरिणयं केचित्कुर्वन्ति केचिन्न। यथा वा सन्न्यासमाग्निहोत्रं च कुर्वन्ति च। सच विशेषः क्वचिद्वाचनिकः क्वचिदानुमानिकः। अन्यथा सेतुदर्शनद्वारकायात्रारमणकद्वीपापरनामकप्रसिद्धशङ्खो- द्धारयात्रानन्दरामायणोक्तपुष्कलावती ( मक्कापरव- नाक ) स्थलविष्णुसरोजदर्शनार्थकादिसमुद्रयानस्यापि युगान्तरेनिषेधाभावेन सार्थक्यात्कलौ निषेधापत्तिरित्या- द्युक्तम्॥अतएव भर्तृहरिणा समुद्रे यात्रा कलियुग एव कृ- तेति ( तत्कृत ३शतकान्तर्गते वैराग्यशतके ) उत्खा- तं नीधिशङ्कया क्षितितलं ध्माता गिरेर्धातवोनिस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः। मन्त्राराधनतत्प रेण मनसा नीताः श्मशाने निशाः प्राप्तः काणवराटकोपि नमया तृष्णेधुना मुञ्च माम्॥९४॥" इत्यत्र "निस्तिर्णः" "सरितांपतिः" "मया" इत्येतैः पदैः स्पष्टमुक्तम्। नन्वेतत्सुभाषितमिति नेदं प्रमाणमिति चेत् ॥ न ॥ तथासति विक्रमार्कराजो पि रोमकपत्तनं जगामेति (ज्योतिर्विदाभरणग्रन्थे कालिदासेन) "यो रोमदेशाधि- पतिं शकेश्वरं जित्वा गृहीत्वोज्जायिनीं महाहवे ॥ आ- नीय संभ्राम्य सुखोच्चयं यो श्रीविक्रमार्कस्समह्यविक्रमः"

इत्यनेनोक्तप्रत्यन्तदेशगमनं कृतमित्यर्थप्रतिपादनेनादोषात् ॥ तच्च समुद्रयानमन्तरा न भवतीति स्पष्टमेव ॥ नन्वयमपि सैन्यद्वाराजिगाय न साक्षादिति चेत् ॥ न ॥ अध्याहारकल्पनस्यान्याय्यत्वात् ॥ एवं बहुनौकाभिः मिहिरकुलराजस्यसिंहलद्वीपगमनं प्रसिद्धमेव । [ राजतरङ्गिण्यां ]—"नौकालक्षचतुष्टयं समभवद्यस्य प्रयाणे विभोः" इत्यादिना प्रातेपादनात् । ग्रन्थानुपलब्धेरवकाशानुपलब्धेश्च यावाँल्लोकाच्छ्रुतस्तावोनवांशोलिखितः ॥ अतएव "पारशीकां स्ततो जेतुं प्रतस्थेस्थलवर्त्मना । इन्द्रियाख्यानिव रिपूंस्तत्त्वज्ञानेनसंयमी" ( रघुवंशे४ सर्गे ६० श्लो ) नौयानमार्गेणगमनेदुर्जयान्मत्वास्थलवर्त्मना जगामेत्युक्तं संगच्छते॥नच नावा समुद्रयानस्य निषिद्धत्वात्स्थलवर्त्मना जगामेति तदाशय इति वाच्यम्॥दृष्टान्तवैषम्यात् ॥दृष्टान्तेनहि मार्गान्तरेण तेषां दुर्जयत्वं प्रतिपाद्यते ॥ अतएव " ऋग्वेदंसामवेदं गणितमथकलां कौशिकीं हस्तिशिक्षां ज्ञात्वा शर्वप्रसादाद्व्यपगततिमिरे चक्षुषी चोपलभ्य ॥ राजानं वीक्ष्य पुत्रं परमसमुदयेनाश्वमेधेन चेष्ट्वा लब्ध्वा चायुः शताब्दं दशदिनसहितं शूद्रकोग्निं प्रविष्टः "इति ( मृच्छकटिकोपोद्घाते ) उक्तमपि युज्यते ॥ यद्यपि" सवर्षसप्ततिं भुक्त्वा भुवंभूलोकभैरवः।भूरिरोगार्दितवपुःप्राविशज्जातवेदसम् "इति (राजतरङ्गिण्यां)

श्रुतम्॥तथापि राज्यभारकालस्तावानिति न विरोधः॥अत एव जयापीडनामा राजा "सान्धिविग्रहिकः सोथ गच्छन्नृपो तच्युतोम्बुधौ। प्राप पारं तिमिग्रासात्तिमिमुत्पाट्य निर्गतः ॥५०३॥" इति (कल्हणकविकृतायां राजतरङ्गिण्यां ४ तरङ्गे )मुक्तं संगच्छते। एवं श्रीभास्कराचार्या यूरोपखण्डस्य दक्षिणभागस्थमिटलीराज्यराजधानी-भूतं गणितशास्त्रज्ञपरिपूर्णं रोमकपत्तनं जगामेत्याङ्गल ज्योतिश्शास्त्रीयरोमकसिद्धान्तग्रन्थे स्पष्टमिति प्रसिद्ध मेव। तथा श्रीमच्छङ्कराचार्याणां मठः सिंहलद्वीपे(सिलोन) स्ति। तत्र तेषां पीठमप्यस्ति। तत्र पीठे मठाधिपानां परम्परासीत्। अन्तिमपीठाधिपतेः शरीरपातेन कैवल्य-सिद्धिः। प्राक् वर्षद्वयाभ्यन्तरे आसीत्। तत्समये योग्य-स्य शिष्यस्यालाभेन पीठाधिपत्यं कस्मैचिदप्यदत्त्वैव मठीयसर्वस्वाम्यं पत्रिकाद्वारा श्रीशृङ्गेरीमठीयादिपीठा-धिपश्री श्री पूज्यपाद( श्रीनृसिंहभारतीस्वामिनां )चरणा-रविन्देषु निवेदितम्। ततः क्वचित्कालाभ्यन्तरे कर्नाटकरा-ज्यान्तर्गतमैसूरराज्यामात्यपदवीमधिष्ठितेन इतः प्राक् सप्ताष्टमासाभ्यन्तरं परलोकं गतेन सर के शेषाद्रिअय्यर-नाम्नास्वशरीरानारोग्यजन्यदुःखपरिहारायक्वचित्क्वचिद्देशे तत्र तत्रोपलब्धरथाग्निशकटनौकादिमार्गेण संचरमाणेन

कदाचित्तत्र गतेन सर्वं तत्रत्यं वृत्तं विचार्यागतमिति कौलीनं यद्यपि श्रूयते । तत्र कियत्सत्यं कियदसत्यं तत्र पीठं यदि सत्यं तदा किं तदीयं वृत्तमित्यादिकं स्पष्टतया न जानीमः॥ तथापि द्वीपान्तरं प्रति गमनं नौकामार्गेणाचार्याणां समये आसीदित्यत्र मानं स्यादिति लिखितम् ॥

किंच "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् "इति ( वेदान्तदर्शने बादरायणस्य ३ । २ । ३ । सूत्रे भाष्ये ) श्रीशङ्करभगवत्पादा " कालविसंवादोपि च स्वप्ने भवति रजन्यां सुप्तोवासरं भारते वर्षे मन्यते ।" इति ( तद्व्याख्यायां रत्नप्रभायां) श्रीगोविन्दानन्दा अपि "अत्र रात्रिसमये केतुमालादिवर्षान्तरे वासरो भवति । " इति व्याजह्नुः ॥ अनेन प्राचीनकाले एमरिकायाः केतुमालवर्षमिति नामासीदिति ज्ञायते ॥राजन्यां सुप्तः इत्यस्य अमरिकायांसुप्त इत्यर्थो वाच्यः । ततश्च 'भारते वर्षे मन्यते"इति शब्दैः श्रीशङ्कराचार्याणां तत्र कदाचिद्गमनमासीदिति ज्ञायते । भाष्याभ्यासार्थं पाताले गतामिति(श ० वि ०) वर्णितम्। तथा कोङ्कणस्थाः प्राक्पश्चिमदक्षिणसमुद्रतीरवासिनश्चान्येपि द्विजाः असकृद्व्यापाराद्यर्थं सर्वतः समुद्रमार्गेण नौयानमद्यावधि कुर्वन्ति प्रायश्चित्तमन्तरा सर्वैर्दाक्षिणोत्तरभारतखण्डीयैः शिष्टैरनुगृहीताः ॥ यद्यपि श्रोत्रियाः वैदिकवर्या

बहवः श्रौतस्मार्तसर्वकर्मप्रवर्तयितारस्तत्तत्पण्डिताश्चाङ्गल विद्यापाण्डित्येन महामहाधिकारपदमधिष्ठितैर्द्वीपान्तरादिकं गतैस्तत्पुत्रादिभिरौदार्यगुणाढ्यैरधिकारबलाधिकैर्वा पृथक् चान्यैश्चाद्यावधि साक्षात्परम्परया च भोजिता इत्यादिकं सर्वदेशेषु सर्वमहामहाक्षेत्रेषु सर्वमहामहापण्डितवर्गेषु च प्रसिद्धं व्यवहारारूढं निर्विवादम् ॥ तथापि ज्ञातसमुद्रयानैःसह भुञ्जानाः पण्डिताः बहिःमया समुद्रयात्रा नौयानेन कृतेति यदोच्यन्ते तदा तं बहिष्कुर्युरिति विचित्रमेतत् ॥ काश्यामपि पण्डिताः स्वयमेव द्वित्रिदिनाभ्यन्तरे पक्षद्वयमपि संसाध्य महादक्षिणां प्रतिगृह्णन्तोऽसकृद्दृष्टाः श्रुताश्च । ततश्च यैरेव खण्डनमारब्धं तैरेव पुनर्मण्डनं यैर्मण्डनं कृतं तैरेव खण्डनं कृतं क्रियते, करिष्यते चेति प्रसिद्धमिति दिक् ।

किंच "तरिकः स्थलजं शुल्कं गृह्णन्दाप्यः पणान्दश । ब्राह्मणप्रातिवेश्यानामेतदेवानिमन्त्रणे" इति ( याज्ञवल्क्येन २ ध्या० २६३ श्लो० ) नौकाव्यवहार प्रागासीदेवेति सिध्यति ।

किंच "कान्तारगास्तुदशकं सामुद्रा विंशकं शतम् ।" इति ( याज्ञवल्क्येन २ ध्या० ३८ श्लो० ) तथा "यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये । शपथैस्स

विशोध्यःस्यात्सर्व वादेप्ययं विधिः।" इति।विशोध्यः सभ्यै-रिति शेषः । "एतच्च संयात्रिकविषयम्" इति (सरस्वती-विलासे व्यवहारकाण्डे सम्भूयसमुत्थानपदे व्यासेन ) चोक्तेः प्रागपि सामुद्रिकनौकाव्यवहारःप्रसिद्ध एव । तथा मनुरपि स्वयं नौकामारुरोहेत्यादिकं प्रसिद्धमेव ।

किंच सवाइजयपुराधिपः क्षत्रियकुलावतंसः श्रीमान-सिंहनामा काबूलदेशेऽधिकृतिं ( सुबेदारीं ) चकारेति चरित्राल्लभ्यते ।

किंच श्रीरणजित्सिंहनामा ( श्रीरणजीतसिंहनामा ) काबूलराज्ये कंचिद्भागं विजित्य तत्र राज्यं संस्थाप्य तत्र दुर्गद्वयं बबन्ध । तदद्यापि जागर्ति ।

किंच क्षत्रियावतंसः काश्मीरमहाराज श्रीगुलाबसिंह नामाटिबेटदेशे लदाकनामकं भागं जित्वा स्ववशेचकार । तथैव तदा श्रीमानसिंहश्रीरणजीतसिंहश्रीगुलाब-सिंहमहाराजैः सह बहवो ब्राह्मणाः पण्डिताः वैश्याश्चा-सन्नेवेति प्रागुक्तरीत्या ज्ञेयम् ।तत्र तदुक्तरीत्या म्लेच्छदे-शत्वेन तत्र गमनासंभवात्कथमेतदिति पर्यालोचने-नाप्ययमर्थो ज्ञाप्यत एव—मेधातिथ्युक्तरीत्यातस्य म्लेच्छदेशत्वाभावान्न दोषःइति । न च तत्र गमनाय समुद्रे नावारोहणमनावश्यकमिति प्रकृतानुपयोगीति वा-च्यम् ॥ म्लेच्छदेशत्वेन" प्रत्यन्तवासिनः" इति निषेध-

विषयत्वस्यैक्यात् श्रीमानसिंहनाम्ना स्थितं स्थानं न म्लेच्छदेश इति त्रैवर्णिकव्यवहारप्रवर्तनाय प्रवृत्तिसमये म्लेच्छदेशत्वस्याबाधकत्वमितिमेधातिथ्याशयाच्च। अन्यथामेधातिथ्युक्तेरसंभवएव स्यात् ।

किंच "संग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः । अनन्यसाधारणराजशब्दोबभूव योगी किलकार्तवीर्यः" इति ( रघुवंशे कालिदासकृते ६ सर्गे ३८ श्लोके) उक्तेरष्टादशस्वपि द्वीपेषु यज्ञं चकारेति तस्यानेकैर्ब्राह्मणैस्सह सर्वद्वीपेष्वपि गमनेन नावा समुद्रयानस्यादुष्टत्वं बोध्यते ॥ न च तस्य त्रेतायुगस्थत्वेन तत्र कलिवर्ज्योक्तनिषेधस्याप्रवृत्तिरिति वाच्यम् ॥ समुद्रयानस्य कलिवर्ज्यत्वेपि अष्टादशद्वीपेषु बहूनां म्लेच्छदेशत्वेन तत्र गमनस्य युगचतुष्टयेपि निषिद्धत्वेन तदसंगतिरिति तेन ब्राह्मणैस्सह तत्र सत्कर्मानुष्ठानेन देशप्रयोज्यदोषस्य निवारणीयत्वावगतेः । न च ( मेधातिथिनामनुस्मृतेर्व्याख्यायां २ ध्या० २३ श्लोकस्य ) उक्तरीत्या कार्तवीर्येणाष्टादशद्वीपेष्वपि स्वामित्वं विजयादिना संपाद्य तेषामार्यावर्तत्वं परिकल्पितम् । म्लेच्छस्वामित्वनिराकरणेन म्लेच्छदेशत्वं तत्र नष्टमिति न निषेधावकाश इति

वाच्यम् ॥ जयार्थं गमनदिने प्रथम एव द्वितीये तृतीय एव वा जयो लब्ध इत्यर्थस्य निश्चेतुमशक्यत्वात् । यद्वा तन्निश्चयेपि द्वीपाद्द्वीपान्तरगमने मध्ये दिनानि कत्यभूवन् तत्र सन्ध्यादिकं क्वानुष्ठितमिति विचारे यत्र जितेऽजिते वा म्लेच्छादिदेशे म्लेच्छादिनापि स्थितं तत्रैवेति वक्तव्यम् । एवं च तस्येदानीन्तनानामस्माकं च गतिस्समानैवेति मदुक्तैव गतिराश्रयणीयेति सिद्धम् ॥ नच पुराणेषु तद्विशेषणत्वेन दृष्टेन दशरथपदेन दशसु दिक्षु गमनमस्याभूदिति प्रतीत्या नावोरथस्य वोपरिगमनासंभवात्कथमेतादिति शङ्कायां पुष्पकादि-विमानेन गतमिति वक्तव्यमित्याकाशभागस्य न समु-द्रत्वं न वा म्लेच्छदेशत्वमिति वाच्यम् । पुष्पकेपि सन्ध्याभोजनादेः " नैकवासा न च द्वीपे नान्तरिक्षे कदाचन । श्रुतिस्मृत्युदितं कर्म न कुर्यादशुचिः क्वचित्" इति निषेधेन महातपस्विनस्तदयोगात् ॥ नच पुष्पकं तस्य पार्श्वे आसीदित्यत्र मानाभावइति वाच्यम् ॥ नौकाकल्पनेन तस्योर्ध्वमधश्च गमनकल्पनेन तदुप-पत्तेः । तत्रोर्ध्वाधोभागकल्पना च एमरिकाभरतखण्डा-द्याश्रित्य।नच नाविःरथव्यवहारोनुपपन्नःइति वाच्यम्॥बहु जनोपभोगयोग्यस्थानस्य दूरगम्यस्य तत्त्वाङ्गीकारात् ॥

किंच म्लेच्छानां महामहात्रैवर्णिकसभायामागमनं वर्णितम्। यथा—" प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महारथः। स तु सर्वैः सह म्लेच्छैस्सागरानूपवासिभिः। " इति (महाभारते)। तथान्यत्रापि वर्णितम्। ततस्तैस्सहैकवाक्यता प्रागप्यासीदेवेति निर्णीयते। तथा (महाभारते सभापर्वणि)—अर्जुनोत्तरयात्रायां शाकलद्वीपस्य दरदस्य समुद्रसेनावतां म्लेच्छभूपानां सहदेवदिग्विजये समुद्रद्वीपवासिम्लेच्छानां ताम्रद्वीपादीनामान्ध्राणामाटविकपौरभेदेन भिन्नानां यवनानां हाररामरहूणानां सागरकुक्षिस्थम्लेच्छानां ( ऐमरिकास्थानामिति भाति ) चाश्वमेधार्थं जयो वर्णितः। तथा सामुद्रिकवाणिज्यं बहुधेतिहासेषूपपादितम्॥ नच " कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा। नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् " इति ( स्मृतेः ) तैरनुष्ठितम्लेच्छदेशगमनादिर्नास्माभिः कर्तव्यः। अयमेवार्थः "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि" इति ( तैत्तिरीयोपनिषदि ) श्रूयते इति वाच्यम्। अनापद्विषयकत्वेनोपपत्तेरित्यलं पल्लवितेन॥

तथा ( महाभारते शान्तिपर्वणि ८९ ध्याये )—"ययातिं नाहुषं चैव मृतं शुश्रुम सृञ्जय। यइमां पृथिवीं

कृत्स्नां विजित्य सहसागराम् ॥ ९४ ॥ अम्बरीषं च नाभागं मृतं शुश्रुम सृञ्जय । शतं राजसहस्राणि शतं राजशतानि च । सर्वैश्वमेधैरीजानास्तेन्वयुर्दक्षिणायनम् ॥ १०३ ॥ शशबिन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय । यस्य भार्यासहस्राणि शतमासन्महात्मनः ॥ गयं चामर्तरनयं मृतं शुश्रुम सृञ्जय॥रन्तिदेवं च साङ्कृत्यं मृतं शुश्रुमेत्यादि०—॥" एतैः श्लोकैस्ते ससागरसर्वपृथ्वीजेतारः इति प्रतिपादितम् । तथा क्यास्पियन्सी नाम्नो देशसमीपे ( बाकूनाम्नि ) राज्ये श्रीमहागणपतेर्मन्दिरं ब्राह्मणाश्च तत्र सन्ति । मक्कायां शिवमन्दिरं पूजादिशून्यमस्ति तथा यःशालिग्रामोमहान्स म्लेच्छैःपूजनीय इति स्थानान्तरं नीतः तदा स्वप्नं तदीयमेव प्राप्य बहुवारमेवमनुभूयतस्य महतः शालिग्रामस्य देवालयं जीर्णमुद्धृत्य ग्रामादिकं दत्त्वाद्यावधि ब्राह्मणैः पूजादिकं कार्यतइति प्रसिद्धिः । एवमन्येष्वपिदेशेषु बहवआर्य देवालया आंग्लचरित्रेषु वर्ण्यन्त इति दिक् ॥

ब्राह्मणा नावा प्राक्कालेषु सञ्चरन्तस्समुद्रेष्वासन्निति ( ऋग्वेदे—मण्ड ७—व २९सू८८ ऋक् ४ )—

" वसिष्ठं ह वरुणो नाव्याधात् ऋषिं चकारस्वपा महोभिः । स्तोतारं विप्रः सुदिनत्वे अह्नां यान्नुद्यावस्तन न्यादुषासः " इति ॥

८० ( सायनभाष्ये अस्यार्थः )

( वसिष्ठं ह=)वसिष्ठं खलु वरुणो नावि स्वकीयायाम् ( अधात् )=आरोपयत् तथा तमृषिम् ( अवोभिः )= रक्षणैः ( स्वपाम् )=संशोभनकर्माणं ( चकार ) वरुणः कृतवान् इत्यादि ॥

---

( ऋग्वेदे मंड ७ वर्ग २५ सू ८८ ऋक् ३ )

" आयद्रुहाव वरुणश्च नावं प्रयत्समुद्रमीरयाव मध्यम् । अधिदयपांस्नुभिश्चराव प्रेङ्ख ईङ्खयावहै शुभेकम्" इति ।

---

सायनः ( अस्यार्थः )-(यद्) यदा वरुणे प्रसन्ने सति अहं वरुणश्च उभौ नावंद्रुममयीं तारणसाधनभूताम् ( आरुहाव)-उभौ आरूढौ बभूविव। तां च नावं ( यद् ) यदा ( समुद्रं मध्यं ) समुद्रमध्यं प्रति ( प्रेरयाव ) प्रकर्षेण गमयाव ( यद् ) यदा च उदकानाम् अधि=उपरि ( स्नुभिः )=गन्त्रीभिः अन्याभिरपि नौभिः ( चराव )= वर्त्तावहै तदा (शुभे )=शोभनार्थं ( प्रेङ्खे )=नौरूपायां दोलायामेव (प्रङ्खावहै) निम्नोन्नतैस्तरङ्गैरितश्चेतश्च प्रविचलन्तौ संक्रीडावहै। ( कं )=सुखं यथा भवति तथा ।

( ऋग्वेदे मण्ड ७ सू० ८९ ऋक् ४ )-

अपां मध्ये तास्थिवांसं तृष्णाऽविदत् जरितारम् । मृळासु क्षत्रमृळय" इति ।

सायनः ( अस्यार्थः ) ( अपां ) समुद्रोदकानां मध्ये तस्थिवांसं=स्थितवतामपि ( जरितारं)=तव स्तोतारं मां (तृष्णा) पिपासा ( अविदत् ) प्राप्तवती। लवणोत्कटस्य समुद्रजलस्य पानानर्हत्वात् । अतस्तादृशं मां ( मृळय )=सुखय ॥

ऋग्वेदे संहितायां ब्राह्मणे समुद्रशब्दनिर्देशाःकेचित्स ङ्गृह्यन्ते स्थानप्रदर्शनमात्रेण ।

मण्डले—सूक्ते—ऋक्

१ ५५ २

प्रश्नोपनिषदि { ६—५ / ६—५

मुंडकोपनिषदि { [ १—९ ] [ ८—५ ] / ३—२—८

महानारायणोपनिषदि { १—३ / ११—७ / ५—५ / ११—३ / ५—६ / ६—१ / ९—१२

[ उपनिषत्सु ]

[ २–१७–१ ] [ २–४–१ ]

| | |
|---|---|
| छान्दोग्ये– | ३–१९–२<br>४–६–२<br>६–१०–१ |
| बृहदारण्ये– | १–१–२<br>१–१–२<br>१–१–२ |
| [२-४-११] [४-५-१२] | ३–३–२– |

श्वेताश्वरोप तीनषदि [ ४–४ ]

| | |
|---|---|
| मैत्रेयोपानिषदि | ४–२ |
| सर्वोपनिषदि | ४ |

( १ ) ऋग्वेदे ऐतरेयब्राह्मणे–रघुवंशे६ सर्गे ३८ श्लो०– "एतेन हवा ऐन्द्रेण तुरः कावषेयो जनमेजयं पारिक्षितमभिषिषेच । तस्मादुजनमेजयः पारिक्षितः

समन्तं सर्वतः पृथ्वीं जयन् परीयाय अश्वेन च मेध्येन ईजे तदेषाभियज्ञगाथा गीयते । आसंदीति धान्याकं रुक्मिणं हरितस्रजम् । अश्वं बबन्ध सारंगं देवेभ्यो जनमेजयः" इति ।

एतेनेत्यादि–महाभिषेकेण च्यवनो भार्गवः शर्यातं मानवमभिषिषेच । तस्मादुशर्यातो मानवः समन्तं सर्वतः पृथ्वीं जयन्परीयाय अश्वेन मेध्येन ईजे देवानां हापि सत्रे गृहपतिरास ।

एतेनेत्यादि–सोमशुष्मावाजरत्नायनशतानिकं सात्राजितमभिषिषेचतस्मादुशतानीकः सात्राजितः समन्तमित्यादि ।

एतेनेत्यादि–पर्वतनारदौ आम्बष्ठमभिषिषिचुः तस्मादुयुधां श्रौष्ठिरौग्रसेन्यः समन्तं सर्वतः०–

एतेनेत्यादि–काश्यपो विश्वकर्माणं भौवनमभिषिषेच । तस्मादु विश्वकर्माभौवनः समन्तं०–भूमिर्हे जगावित्युदाहरन्ति नमामर्त्यः कश्चनदातुमर्हति विश्वकर्मन् भौवन मां दिदासिथ निमङ्क्ष्येहं सलिलस्य मध्ये मोघस्त एष कश्यपायासंसगरः इति–

एतेनेत्यादि–वसिष्ठः सुदासं वैजवनमाभिषिषेच । तस्मादु सुदासो वैजवनः समन्तं०–

एतेनेत्यादि–संवर्त आंगिरसो मरुत्तमाविक्षितमभिषिषे-

च । तस्मादुमरुत्त आविक्षितः समन्तं सर्वतः०—तदप्येष श्लोको गीयते मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे । आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ।

एतेनेत्यादि—उदमय आत्रेयोऽगमभिषिषेच । तस्मादु अगः समन्तं सर्वतः० ।

अन्तरिक्ष एव समुद्रशब्दव्यवहारादिकं बहु दृश्यते । एवमन्येप्युपलब्धुं शक्यन्ते प्राचीनत्रैव णिकनौकायात्रा व्यवहाराः इत्यलम् ॥

इत्यब्धिनौयानमीमांसायां शिष्टाब्धिनौयान-
नामकं पञ्चमं खण्डं समाप्तम् ॥ ५ ॥

---

## अथाब्धिनौयानमीमांसायां म्लेच्छदेशवि-चारादिनामकंषष्ठं खण्डमारभ्यते ।

पूर्वं "प्रत्यन्तवासिनः" म्लेच्छदेशा इति व्याख्यातम् । तत्र के ते म्लेच्छदेशा इत्याकाङ्क्षायामुच्यते ।

### सुमेरौ नव वर्षाणि ।

"स्याद्भारतं किम्पुरुषं हरिवर्षं च दक्षिणाः । रम्यं हिरण्मयं कुरूसुमेरोरुत्तरास्त्रयः । भद्राश्वकेतुमालौ तु द्वौवर्षौ पूर्वपाश्चिमौ । ईलावृतं तु मध्यस्थं सुमेरुर्यत्र तिष्ठति ।" इति ( लिङ्गानुशासनव्याख्याने मुकुटेन भूवर्गे ६ श्लो ) इति ।

## भारतवर्षलक्षणम् ।

"उत्तरंयत्समुद्रस्य हिमवद्दक्षिणंचयत् ॥ ७५ ॥ वर्षं तद्भारतं नाम यत्रेयं भारती प्रजा ॥ भरणाच्च प्रजानां वै मनुर्भरतउच्यते ॥ ७६ ॥ निरुक्तवचनाच्चैववर्षंतद्भारतं स्मृतम् ॥ ततःस्वर्गश्चमोक्षश्च मध्यश्चान्तश्चगम्यते ॥ नखल्कन्यत्रमर्त्यानां भूमौकर्मविधीयते ॥ ७ ॥ ( वा० पु० पू० ४५ ध्य० )

## आर्यावर्तलक्षणम् ।

"आसमुद्रात्तुवैपूर्वादासमुद्राच्चपश्चिमात् ॥ तयोरेवान्तरंगिर्योः ( आर्यावर्तं ) प्रचक्षते" इति मनुना २ ध्या० २२ श्लो० )

## मध्यदेशलक्षणम् ।

"हिमवद्विन्ध्ययोर्मध्यंयत्प्राग्विनशनादपि ।
प्रत्यगेवप्रयागाच्च ( मध्यदेशः ) प्रकीर्तितः"
इति ( मनुना ० २ ध्या० २१ श्लो )

## ब्रह्मावर्तलक्षणम् ।

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तदेवंनिर्मितंदेशं ( ब्रह्मावर्तं ) प्रचक्षते" इति मनुना २ ध्या० १७ श्लो० )

## ब्रह्मर्षिदेशलक्षणम् ।

"कुरुक्षेत्रंचमत्स्याश्चपञ्चालाःशूरसेनकाः ॥

एष (ब्रह्मर्षिदेशो )ऽयं ब्रह्मावर्तादनन्तरः" इति (मनुना २ ध्या० १९ श्लो० )

## तत्रापरार्कमतम् ।

"यस्मिन्देशे मृगःकृष्णस्तस्मिन्धर्मान्निबोधत" इति ( याज्ञवल्क्येन १ ध्या०२ श्लोकस्यव्याख्यानावसरे अपरार्केण) मनूक्तब्रह्मावर्तब्रह्मर्षिदेशमध्येदेशार्यावर्तादिधर्मदेशानांवासयोग्यानामलाभे आह "यस्मिन्देशइति" इतिव्याचख्ये ।

## म्लेच्छदेशस्य लक्षणम् ।

"चातुर्वर्ण्यव्यवस्थानंयस्मिन्देशे न विद्यते। स म्लेच्छदेशो विज्ञेयः " इति।

## म्लेच्छयज्ञियदेयोः-

" कृष्णसारस्तुचरतिमृगोयत्रस्वभावतः । सज्ञेयोयज्ञियो देशः म्लेच्छदेशस्त्वतः परः" इति ( मनुना २ ध्या० २३ श्लो० )

## म्लेच्छार्यावर्तयोः-

"चातुर्वर्ण्यव्यवस्थानंयस्मिन्देशेनविद्यते। तंम्लेच्छाविषयंप्राहुरार्यावर्तमतः परम् " इति ( अमरसिंहेन नामलिङ्गानुशासनेभूवर्गे ७ श्लो० )

म्लेच्छार्यावर्तादिदेशानां--

" अर्थद्वारेणायंशब्दः प्रवृत्तो म्लेच्छानांदेश इति। तत्र यदि कथञ्चिद्ब्रह्मावर्तादिदेशमपिम्लेच्छाआक्रमेयुस्तत्रैवावस्थानं कुर्युः भवेदेवासौम्लेच्छदेशः। तथा यदिकश्चित्क्षत्रियादिजातीयो राजासाध्वाचरणोम्लेच्छान्पराजयेत चातुर्वर्ण्यं वासयेत् म्लेच्छांश्चार्यावर्तइव चण्डालान्व्यवस्थापयेत्तदासोपि स्याद्याज्ञियोदेशः। यतोनभूमिः स्वतो दुष्टा। संसर्गाद्धिसादुष्याति अमेध्योपहतेव। प्रागुक्तदेशव्यतिरेकेणापिसातिसामग्रीसमवधानेत्रैवर्णिकेनाकृष्णमृगचरणोपिदेशोयष्टव्यमेव। तस्मादनुवादोयं " सज्ञेयो याज्ञियोदेशोम्लेच्छदेशस्त्वतः परः" इति। आर्याः वर्तन्ते भ्रमन्ति यत्र (आर्यावर्तः) अत्राहिम्लेच्छा आक्रम्याक्रम्यापि नचिरंस्थातारो भवन्ति " इति (मनुस्मृतिटीकायांमेधातिथिः २ ध्या० देशविभागप्रकरणेत्रैव)

नचेदमयुक्तम्। म्लेच्छदेशाकाङ्क्षायांम्लेच्छदेशभिन्नदेशनिरूपणस्याप्रयोजकत्वादितिवाच्यम्। क्वचिन्म्लेच्छदेशलक्षणे क्वचित्प्रतियोगित्वेन क्वचिदनुयोगित्वेन चेत्येवं भेदनिर्देशेनतन्निरूपणस्यावश्यकत्वात्॥ तथाचेदानीमिदं भरतखण्डंम्लेच्छदेशोवाम्लेच्छदेशान्यब्रह्मावर्तदेशब्रह्मर्षिदेशमध्यदेशार्यावर्त्तचतुर्देशान्यतमोवेति तु

विचार्यैनाश्रिन्वन्तुसुधियः । अधिकं तु प्रथमखण्डे व्याख्यातम् ॥ ननु के ते म्लेच्छा इतिचेत् ॥ उच्यते ॥

## म्लेच्छलक्षणम् ।

"गोमांसभक्षकोयस्तुलोकबाह्यं च भाषते।सर्वाचारविहीनोसौ म्लेच्छइत्यभिधीयते ।" "ब्राह्मण्यां वैश्यतो जातः क्षत्ताभवतिनामतः । अस्यामनेन चौर्येणम्लेच्छो विप्रात्प्रजायते " इति ( जातिविवेके सूतसंहितायां ) म्लेच्छयवनादीनामुत्पत्तिः ( श्रीवाल्मीकिरामायणे बालकाण्डे ५४–५५ सर्गयोः ) इति ।

## चण्डालाः–

चण्डालाबहुधा–जातिचण्डालाःकर्मचण्डालाश्चेति ।

## जातिचण्डालाः

"ब्राह्मण्यांक्षत्रियात्सूतोवैश्याद्वैदेहकस्तथा ॥ शूद्राज्जातस्तुचण्डालःसर्वधर्मबहिष्कृतः ॥ ९३ ॥" इतियाज्ञवल्क्यस्मृतेः ।

" क्षत्रियाद्विप्रकन्यायांसूतोभवतिजातितः ॥ वैश्यान्मागधवैदेहौराजविप्राङ्गनासुतौ ॥ शूद्रादायोगवः क्षत्ताचण्डालश्चाधमोनृणाम् " इति ( मनुना १० ध्या० ११ श्लो० )

" ब्राह्मण्यांयश्शूद्रवीर्येणजातश्चण्डालउच्यते ॥ अयःपत्राश्चकर्तव्याधनमेषांचगर्दभाः ॥ " इति ( जातिविवेके )

## म्लेच्छजातिभेदाः—

" चण्डालप्लवमानङ्गदस्युचाण्डालपुल्कसाः" इति चण्डालपर्यायानुक्त्वा " भेदाःकिरातशबरपुलिन्दाम्लेच्छजातयः ॥ २० ॥" इति ( नामलिङ्गानुशासनेअमरसिंहेन) यत्तुकिरातादयस्त्रयोम्लेच्छजातयश्चण्डालभेदाः। म्लेच्छशब्दवाच्याइति ( मकुटः ) ॥ तन्न ॥ जातिपदवैयर्थ्यप्रसङ्गात् । म्लेच्छाइत्येववक्तुंयुक्तत्वात् ॥ किरातादीनांम्लेच्छजातित्वं च "किरातोम्लेच्छभेदेस्यात् " इति " शबरोम्लेच्छभेदे स्यात् " इति (मेदिन्यां) "पुलिन्दःकथ्यते म्लेच्छे" इति (तारपालेन) चोक्तेस्सिद्धम् ॥ "म्लेच्छ अव्यक्तेशब्दे " इति ( पाणिनितन्त्रेधातुपाठे ) उक्तो वेदशास्त्ररूपभगवदभिव्यक्ताभिन्नशब्दोच्चारणं म्लेच्छधातुनोच्यते । तदुच्चारयितारोम्लेच्छा इति पर्यवसितम् ।

ननु शूद्राणामपि म्लेच्छत्वापत्तिरितिचेत् ॥ न ॥ शास्त्रे एव तेषामपि पौराणिकमन्त्रोच्चारणाद्युक्तेरदोषात् ॥

## ग्रामचण्डालाः—

"चण्डाला द्विविधाः आन्तराबाह्याश्च। आन्तराअपि द्विविधाः। जातितः कर्मतश्चेति ॥ तत्र प्रथमे आद्याः— "रजकश्चर्मकारश्चनटो बुरुड एवच ॥ कैवर्तमेदभिल्लाश्च स्वर्णकारश्चसौचिकः । कारुकोलोहकारश्चशिलाभेदीच नापितः। तक्षकास्तिलयन्त्रीसूनकश्चक्रीतथाध्वजी ॥

एते षोडशधा प्रोक्ता श्चण्डाला ग्रामवासिनः ॥" इति ( हेमाद्रौप्रायाश्चिकाण्डेगारुडे )

## ग्रामचण्डाल्यः—

"रजकश्चर्मकारश्च नटोबुरुडएवच। कैवर्तमेदभिल्लाश्च स्वर्णकारश्चसूचिकः। तक्षकस्तिलयन्त्रीसूनकश्चक्री तथा ध्वजी। नापितःकारुकश्चैवषोडशैतेजघन्यजाः। तत्स्त्रियो ग्रामचण्डाल्योविप्रैर्वर्ज्याः प्रयत्नतः" इति ( पराशरेण ) "रजकश्चर्मकारश्च नटोबुरुडएवच । कैवर्तमेदभिल्लाश्च सप्तैतेचान्त्यजाः स्मृताः" इति ( मिताक्षरायां ३ ध्या२६९श्लो०व्या०)इत्युक्तेरेतेन्त्यजशब्दवाच्या अपि।

## जातिचण्डालधर्माः—

"ब्राह्मण्यांक्षत्रियवैश्यशूद्रेभ्यो यथाक्रमंसूतवैदेहच-ण्डालाभवन्ति । एतेषांमध्येचण्डालः सर्वधर्मबहिष्कृतः । सर्वेषां वर्णानां ये धर्मास्ते सर्वधर्माः तेष्वनधिकारीनपुनः सर्वेषु धर्मेषु अनधिकारीत्यर्थः । यत आह देवलः—"स्व-जातिशोधनं सर्वप्रणामोस्तितिक्षाव्यवहारशुद्धिरपरावमा-( सा ) नं स्वभृत्यपोषणं स्वकर्मानुष्ठानं प्रधानकर्मवर्जन-मिति चण्डालधर्मः। ततश्चवर्णधर्मः प्रधानकर्म ( स्वकर्म ) स्वकीयवृत्तिः" इति ( अपरार्के याज्ञवल्क्यस्मृ० ९३श्लो० व्या० )

## ( २ ) द्वितीया बाह्याश्चण्डालास्तद्धर्माश्च-

"यथैवशूद्रो ब्राह्मण्यां बाह्यंजन्तुंप्रसूयते॥तथाबाह्यतरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ॥ ३० ॥ प्रतिकूलंवर्तमाना बाह्याबाह्यतरान्पुनः॥ हीनाहीनान्प्रसूयन्तेवर्णान्पञ्चदशै-वतु ॥ ३१ ॥" इत्यारभ्य "चण्डालश्वपचानांतु बहि-र्ग्रामात्प्रतिश्रयः ॥५२॥ वासांसिमृतचैलानि भिन्नभाण्डे-षुभोजनम् ॥ कार्ष्णायसमलङ्कारः परिव्रज्याच नि-त्यशः ॥ नतैः समयमन्विच्छेत्पुरुषोधर्ममाचरन् ॥५३॥ व्यवहारोमिथस्तेषां विवाहस्सदृशैः सह॥ अन्नमेषां परा-धीनं देयंस्याद्भिन्नभाजने॥रात्रौनाविचरेयुस्ते ग्रामेषुनगरेषु च ॥५४॥ दिवा चरेयुः कार्यार्थं चिह्निताराजशासनैः। अबान्धवंचैवशवं निर्दहेयुरितिस्थितिः॥५५॥वध्यांश्चहन्युः सततं यथाशास्त्रं नृपाज्ञया ॥ वध्यवासांसि गृह्णीयुःशय्या-श्चाभरणानिच॥५६॥" इति( मनुना १०ऽध्या०१श्लो०

## कर्मचण्डालाः-

"आरूढपतिताज्जातो ब्राह्मण्यां शूद्रजश्चयः॥ चण्डा-लौ तावुभौप्रोक्तौ सगोत्राद्यश्च जायते" इति ( पराशरमा-धवीये प्रायश्चित्तकाण्डे १० ध्या० ९म श्लो०व्याख्याने यमेन) "आरूढपतितापत्यं ब्राह्मण्यां यश्च शूद्रजः।सगोत्रो-ढा सुतश्चैव चण्डालास्त्रय ईरिताः" इति (यमेन ) "ये च

प्रव्रजिताः पत्न्यां या चैषा बीजसन्ततिः॥ (बिन्दुला) नाम चण्डाला जायन्ते नात्रसंशयः" इति (आग्नेयपुराणे १६९ ध्या०२४-२९श्लो०) "संन्यासं चैव संत्यज्यपुनरुत्तिष्ठते द्विजः। नतस्य निष्कृतिर्दृष्टा स्वधर्मात्प्रच्युतस्यच। आरूढो नैष्ठिकं कर्म पुनरावर्त्तयेद्यतिः। आरूढपपतितोज्ञेयः सर्वकर्मबहिष्कृतः। चण्डालाः प्रत्यवसिताः परिव्राजकतापसाः" इति (तत्रैवाङ्गिरसा)। ननुजातिःकर्मणोत्पद्यत इति क्वदृष्टमन्यत्रान्यथोक्तेरितिचेत्॥ उच्यते। "जन्मना जायते शूद्रः संस्काराद्विज उच्यते" इत्यध्ययनादिना वेदप्रधानो ब्राह्मणः इति स्थिते वैवस्वतस्य मनोः सप्तमः पुत्रो नरिष्यन्तः तस्य वंशे दशमोऽग्निवेश्यः कर्मणा ब्राह्मणोऽभूदिति (श्रीभागवते ९ मस्कं० २ ध्या २२ श्लो०) तथा क्षत्रियो विश्वामित्रो ब्राह्मणोभूत् (महाभारते आदिपर्वं० १७९ ध्या वाल्मीकिरामायणे बालकाण्डे ६९ सर्गे) तथा स्थिरासनप्रधानं वाणिज्यादिकं वैश्यकृत्यं मुख्यमिति वैवस्वतमनोश्चतुर्थः पुत्रो दिष्टः तत्पुत्रो नाभागः वैश्यकर्मणावैश्यत्वमापेति (भागव-९ स्कं २ ध्या २९ श्लो० "तथा नीचातिनीचकर्मणा सत्यव्रतश्चण्डालोभूत्"इति (भागव-९स्कं७ध्या०) एवमादिकमन्यत्रोक्तमिति तत एव ज्ञेयम्॥

## देवजात्यादिष्वपि चण्डालाः ।

" पिशाचभूतकूष्माण्डाः प्रेताश्चण्डालजातयः । घण्टाकर्णः पिशाचेशो भूतेशो भैरवः स्मृतः । कूष्माण्डेशो भृङ्गि रुक्मी प्रेताधीशस्तथोल्मुकः " इति ( विष्णुरहस्ये २९ तमेऽध्याये )

## अतिदिष्टचण्डालाः—

"अनाशकान्निवृत्तस्तु चातुर्वर्ण्यांव्यवास्थितः । चण्डालः स तु विज्ञेयो वर्जनीयः प्रयत्नतः" इति ( तत्रैव वृद्धपराशरेण जलाग्न्यादिमरणप्रायश्चित्तप्रकरणे ) ( अनाशकात् )=उपोषणात् "तपोनानशनात्परम्" इति श्रुतेः।

तथा "आत्महननोद्यमेन ब्राह्मणत्वमपगतम् । चण्डालत्वमायातम् " इति ( पराशरमाधवीये १२ ध्या० ८ श्लो० व्या० )

तथा "मृताहं समतिक्रम्य चण्डालः कोटिजन्मसु अतो विप्रैर्न सन्त्याज्यं प्राणैः कण्ठगतैरपि " इति ( हेमाद्रौ प्रायश्चित्तकाण्डे देवलेन )

## कर्मचण्डालसंज्ञकाः—

" नकार्यमावसथ्येन नाग्निहोत्रेण वा पुनः। स भवेत्कर्मचण्डालो यस्तु धर्मपराङ्मुखः ।" इति (पराशरस्मृतौ ४ ध्या० १९ श्लो० )

"गुगलंशुनकानां स धर्तुं योग्यो महीभृता ॥ विधवायां र्जातः कर्मचण्डाल उच्यते । वापीकूपादिमृत्कर्मकर्ता स्पृश्य एव सः" इति ( जातिविवेके )

## चण्डालसमाः ।

" अस्थीनि परकीयानि भृत्यर्थं योहरेद्द्विजः । प्रस्थानमात्रेण स चण्डालसमो भवेत् " इति (स्मृति-काफले प्रायाश्चित्तकाण्डे मनुना)

तथा "मूल्यं गृहीत्वा दाहादि प्रेतकृत्यं करोति यः । र्शी गच्छेत्परार्थं यस्तौ चण्डालसमौ स्मृतौ" इति त्रैव तेन)

## म्लेच्छोत्पत्तिश्च ।

( श्रीवाल्मीकिरामायणे बालकाण्डे ) उक्ता ।

तथा " प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी । तीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति " इति तत्रैव पराशरेण )

## दस्यवः—

" पौण्ड्रकाश्चोण्ड्रद्रविडाः कांबोजा यवनाः शकाः । रदाः पह्लवाश्चीनाः किराता दरदाः खशाः । खबाहूरुजातानां या लोके जातयो बहिः । म्लेच्छवाच-ार्यवाचस्ते सर्वे दस्यवः स्मृताः " इति ( मनुना ० ध्या० )

" प्रसाधनोपचारज्ञमदासंदासजीवनम्। सैरन्ध्रं वागुरा-वृत्तिं सूते दस्युमनागवी " इति ( मनुना ) ( अयोगवी )–वैश्यायां शूद्रजा दस्योर्वर्णसङ्कर-जान्सूते।

नच "चण्डालाद्यैश्च दस्युभिः" इति ( मनुनाध्या १३१श्लो०) तयोर्भेदेन निर्देशो न युज्यत इति वाच्यम्। " दस्युचण्डालपुल्कसाः " इत्यमराभिप्रायेणोक्तेः मनुवचनेऽभयोर्ग्रहणं तु गोबलीवर्दन्यायेन।

## यवनतुरुष्कयोर्भेदः–

" मेदस्य वनिताकायात्सङ्गतान्ध्रेणचेद्रहः। सा सूते यवनंपुत्रं तुरुष्कः स प्रकीर्त्तितः। प्रसिद्धे म्लेच्छदेशे यो गोवधेनास्य वर्तनम्।" इति (शूद्रकमलाकरे लक्षणकाण्डे) " इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचा-र्याणामानुक् " इति ( पाणिन्यष्टके ४।१।४९ ) सूत्रे "यवनाल्लिप्याम्" इति वार्त्तिकसिद्धं यवानानी ( यूनानी ) इतितेषांलिपेर्नाम प्रसिद्धम्।

नच "चण्डालश्चतुरुष्कश्चद्वावेतौ तुल्यपापिनौ" इति ( तत्रैव देवलस्य ) उक्तौ चण्डालतुरुष्कयोर्भेदेन निर्देशा-द्भिन्नावेताविति वाच्यम् ॥ व्याप्यव्यापकभेदमाश्रित्य तथोक्तेः। उक्तातिरिक्ततयातत्सत्तानुमानाच्च ॥

कर्मोत्कर्षेणेव कर्मापकर्षेण चण्डालत्वमेवेति न किन्तु जात्यन्तरमपि प्रविशन्ति । अतएव "शनकैस्तुक्रियालोपादिमाः क्षत्रियजातयः । वृषलत्वं गतालोके ब्राह्मणातिक्रमेण च ॥ ४३ ॥" इति ।

## भ्रष्टसङ्गादिनापि भ्रष्टाः ।

( मनुना० १० ध्या० )—"व्यभिचारेण वर्णानामवेद्यावेदनेन च । सङ्गेन धर्मत्यागेन जायते वर्णसङ्करः ।" इति ।

## कर्मभ्रष्टाः—

"कर्मभ्रष्टा भविष्यन्ति चतुर्वर्णाः कलौयुगे । राजानो धर्महीनाश्च पीडयिष्यन्ति तेप्रजाः । अधर्मवल्लभो लोको धर्मद्वेषी च मत्सरी । भविष्यन्ति कलौ विप्रा आचारश्रुतिवर्जिताः । द्यूतमद्यरतानित्यं सर्वव्यसनिनः सदा" इति ( जैमिनीयाश्वमेधे कलिधर्मप्रकरणे )।

## पतिताः—

"श्रुतिविक्रयिणो यत्र परपूर्वाः समुद्रगाः । असमानान्याजयन्तिपतितास्ते प्रकीर्तिताः" इति ( उशनस्म ) तथा पतितपरिगणनं ( पराशरमाधवीये ४ ध्या २ ॥ श्लो०व्या ) तथा—"दत्तानुयोगानध्येतुः पतितान्मनुरब्रवीत्" इति (मिताक्षरायां ३ ध्या० २८९ श्लो०व्या० स्मृत्यन्तरे )

## व्रात्यजातिः।

"द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान्। तान्सावित्रीपरिभ्रष्टान्व्रात्यानिति विनिर्दिशेत् ॥ २० ॥" इति ( मनुना ११ ध्याये )

## पङ्क्तिदूषकसंज्ञाः।

"स्वैरिणी च पुनर्भूश्च रेतोधाः कामचारिणी। सर्वभक्षा च विज्ञेयाः पञ्चैताः शूद्रयोनयः। एतासां यान्यपत्यानि ह्युत्पद्यन्ते कदाचनान तान्पङ्क्तिषु युञ्जीत न ते पङ्क्त्यर्हकाः स्मृताः" इति ( हारीतः )।( रेतोधाः )=कुण्डमातेति ( सर्वभक्षा ) सुरापीति च कमलाकरः।

## श्वपाकः।

"क्षत्तुर्जातस्तथोग्र्यां तु श्वपाक इति चोच्यते।" शूद्रात्क्षत्रियाजः ( क्षत्ता )। क्षत्तुःशूद्रायाम्—( उग्रः )

## वृधापाकः।

"यो हि हित्वा विवाहाग्नि गृहस्थ इति मन्यते। अन्नं तस्य न भोक्तव्यंवृथामाको हि संस्मृतः" इति ( स्मृतिमुक्ताफले प्रायश्चितखण्डे शातातपबृहस्पती।

## दासगोपालार्धिकाः।

"शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः। संस्कारात्तुभवेद्दासश्चासंस्काराच्चुनापितः ॥ २२ ॥ क्षत्रियाच्छूद्र-

कन्यायां सुतोजायेतनामतः। सगोपालइति ज्ञेयो भोज्यो विप्रैर्न संशयः॥ २३ ॥ वैश्यकन्यासमुद्भूतो ब्राह्मणेनतु संस्कृतः। सह्यार्धिकइतिज्ञेयो भोज्यो विप्रैर्नसंशयः॥ २४ ॥" इति (पराशरेण ११ ध्याये)

## शूद्राः—

शूद्राद्विविधाः जातितःकर्मतश्च ॥ जातितःप्रसिद्धाः। प्रथमोजातिशूद्रः पादप्रधानः गतागतादिनाकर्मकर्ता सेवकशक्तिप्रधानः शूद्रः इति। "शूद्रादेव तु शूद्रायां जातःशूद्र इति स्मृतः" इति(औशनसस्मृतौः श्लो. ४८)। कर्मणा शूद्रस्य ब्राह्मण्यादिकम्।

## कर्मशूद्रः—

"त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्" इति तथा—"अग्निकार्यपरिभ्रष्टाः सन्ध्योपासनवर्जिताः। वेदंचये नधीयानास्ते सर्वे वृषलाः स्मृताः" इति (स्मृतिरत्नाकरे)

तथा "शूद्रत्वं याति स द्विजः" इति (माधवीये पराशरव्या—११ ध्याय ९ श्लो.)

"चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका। ऊढा या च सगोत्रेण वृषल्यः परिकीर्तिताः।" इति (पराशरस्मृति १० ध्या ८ श्लो० व्या० माधवीयेस्मृत्यन्तरम्)।

## देवविशेषुशूद्रसमाः—

"यमो मानुषगन्धर्वास्तथैवाजानदेवताः ॥ शनिपुष्करयक्षाद्या यमदूताश्च सर्वशः ॥ चित्रश्च चित्रगुप्तश्च बन्दिवेतालकिन्नराः ॥ विद्याधरादयो येन्ये शूद्रवर्णाः समस्तशः" इति ( बृहज्ज्योतिषार्णवे मिश्रस्कन्धे विष्णुरहस्ये २२ तमेऽध्याये )

## देवविशेषेषु शूद्राः—

"यक्षाश्च गुह्यकाश्चापि शूद्रवर्णाः प्रकीर्तिताः" इति ( बृहज्ज्योतिषार्णवे मिश्रस्कन्धे विष्णुरहस्ये २९ तमेऽध्याये )

## शूद्रविभागः—

शूद्रा द्विविधाःनिरवसिता अनिरवसिताश्चायैर्भुक्ते पात्रं संस्कारेण शुध्यति तेऽनिरवसिताः। यैर्भुक्ते पात्रं संस्कारेण न शुध्यति ते निरवसिताः इति ( शूद्राणामनिरवसितानाम् " इति ( पाणिन्यष्टके २-४-१० सूत्रे महाभाष्ये) " भस्मना शुध्यते कांस्यम् " इत्याद्युक्तसंस्कारेणापि पात्रं न शुध्यति तेषामित्यर्थः" इति ( मनोरमायामत्रैव )

"अत्रेदं चिन्त्यम् अनिरवसितानामिति निषेधबलादेव शूद्रशब्दोत्र त्रैवर्णिकेतरपरः । नतु शूद्रत्वजातिपरः"

इति ( मनोरमायामत्रैव ) उक्तेर्नशूद्रा द्विविधा इति वक्तुं युज्यते। तज्जात्या क्रान्तानां द्वैविध्याभावादिति ॥ अधिकं प्रथमखण्डे उक्तमित्यलम् ॥

इत्यब्धिनौयानमीमांसायांम्लेच्छदेशविचाराख्यं
नाम षष्ठं खण्डं समाप्तम् ॥ ६ ॥

## अथ प्रायश्चित्ताख्यं सप्तमं खण्डं प्रारभ्यते।

न च चण्डालाद्यशुचिजनसम्बन्धान्नावोऽशुद्धत्वा त्समुद्रयाने तत्र सन्ध्यादिसत्कृत्यं दुष्करं स्यादिति वाच्यम् ॥ "आसनं शयनं यानं नावः पथि तृणानि च। चण्डालपतितस्पृष्टं मारुतेनैव शुध्यति" इति ( बोधायनस्मृतौ। ) उक्तेर्मारुतेन शुद्ध्यङ्गीकारेणा-दोषात् ॥ न च तत्र चण्डालादिसामीप्यमिति तद्यानम युक्तमिति वाच्यम् ॥ "युगं युगद्वयं चैव त्रियुगं च चतु-र्युगम्। चण्डालसूतिकोदक्यापतितानामधः क्रमात्"इति (पराशरस्मृतौ १२ध्या०७८श्लो०)उक्तेर्मारुतेन नौः शुद्धा पितत्रैव चण्डालादिवासप्रयोज्यप्रत्यवायस्यपातितोदक्या-सूतिकाचण्डालानां क्रमेण चतुस्त्रिद्व्येकयुगप्रमाणेन व्य-वधानेनादुष्टत्वस्वीकारात्॥युगप्रमाणं च लोकव्यवहारा-दवगन्तव्यमिति (तत्रैव माधवीये)स्पष्टम्।न च शवविण्मू-

१ चण्डालादिस्पर्शे।

त्रादिदूषितायां नावि कथं शुद्धिरिति वाच्यम्। "शवविण्मूत्रशुक्रैस्तुदूषितं तु मृदम्बुभिः।शोध्यादौ शोधनीयं च गोमूत्रक्षीरवारिभिः" इति ( पराशरमाधवीये ७ ध्या० २९ श्लो० व्या० ब्रह्माण्डपुराणे) उक्तरीत्यामृज्जलादिना शुद्धिसिद्धेः।न च "ननाविभुञ्जीत ॥६॥" इति ( आपस्तम्बेन १ मे धर्मप्रश्ने प्रथमपटले ) सूत्रेण तत्र भोजनस्य निषिद्धत्वान्न नावा समुद्रयानं स्यादिति वाच्यम् ॥ तत्रापिभूमौ स्थितस्य " न नाविभुञ्जीत ॥६॥" इति सूत्रोत्तरं " तथा प्रासादे ॥ ७ ॥" इति ( आपस्तम्बेन १ मे धर्मप्रश्ने ५ मपटले ) सूत्रेण प्रासादे भोजननिषेधात्कथं भुज्यत इति प्रश्ने "कृतभूमौ तु भुञ्जीत ॥ ८ ॥" इति ( आपस्तम्बेन तत्रैव पटले ) सूत्रेण कृत्रिमभुवं परिकल्प्य तत्र भुञ्जीतेत्युक्तेस्तत्र भुज्यत इत्युत्तरस्यैवानुवादेनेष्टसिद्धेः । अत एव "न प्रासादे दारुमये मञ्चे वा सौधेऽशुद्धेऽपि पात्रे" इति "कृतभूमौ गोमयादिना संस्कृतायां भुञ्जीत" इति च ( संवर्तेन) तथा—"नाङ्कस्थो दारुसंस्थो वा नाकाशे नान्धकारिते। नाश्नीयाच्छयनारूढो न दीपे निहते पुनः" इति ( शाण्डिल्येन) उक्तं संगच्छते ॥

ननु सिन्धुसौवीरेत्य 'त्रप्रत्यन्तवासिनः' इत्यनेन समुद्रया-

नेप्रत्यन्तवासिभिः संसर्गो भवतीति तद्दोषनिराकरणाय पुनस्संस्कारादिकर्तव्यं स्यादितितत्संसर्ग एव निषिध्यते न तुतद्देशगमनमपि न चैवं प्रत्यन्तवासिनां भरतखण्डमागतानां भरतखण्डेशुद्धक्षेत्रादावनिषिद्धदेशे संसर्गो यैर्भवति तेषां पुनस्संस्कारापत्तिरितिवाच्यम्॥अनिषिद्धधर्माचारवद्भरतखण्डस्थदेशेभ्योन्यदेशं गत्वा तत्रत्यैस्तत्र सहवास एव प्रायश्चित्तं नोक्तभरतखण्डस्थे देशे तैःत्सहवास इति स्वीकारात् ॥ न च विनिगमनाविरहादुभयत्र तत्सहवासः प्रायश्चित्तापादकइत्युचितमिति वाच्यम् ॥ चण्डालादिभिराक्रान्तेल्पेतीर्थादौ कृतं कर्म दोषावहंतन्निर्गमोत्तरं तत एव शुद्धे तत्रैव कृतंकर्म बहुफलमित्यादिरीत्याशास्त्र लोकव्यवहारात्काश्यादौमहाक्षेत्रेदुष्कृत्यानिकुर्वतोपि काशीतोऽन्यत्र वासं विहाय काश्यामेव वस्तव्यमिति नियमवतस्तत्कर्मप्रयोज्यप्रत्यवायसंबन्धतदभावयोस्तारतम्यवद्दोषसम्बन्धतदभावयोस्तारतम्ययोरूह्यत्वात्॥किंच भरतखण्डेप्रत्यन्तवासिभिःसंसर्गे प्रत्यन्तदेशे भरतखण्डस्थैःसहसंसर्गे च संसर्गप्रयोज्यप्रत्यवायविषयेन्यूनाधिक्यमवश्यमभ्युपेयम्।यतोवेदोक्तसुकर्मबहुलेयं भूमिःतद्विपरीता च प्रत्यन्तभूमिः॥ ततश्चकर्मठबहुलभूमध्यस्थस्यभरतखण्डेतत्रत्यैस्सहसंसर्गे तत्रात्रत्यैस्सहसंसर्गे उत्पत्स्यमानत-

त्प्रयोज्यप्रत्यवायापेक्षयात्रोत्पत्स्यमानतत्प्रयोज्यप्रत्यवायस्य दौर्बल्याद्ल्पत्वाच्चमन्दमेवप्रसरणमतिशीतप्रदेशे विषस्य प्रसरणमिव ॥ ततश्च प्रत्यन्तदेशेतूष्णदेशे विषस्यप्रसरणमिव प्रत्यन्तवासिभिःसंसर्गप्रयोज्यप्रत्यवायः भरतखण्डस्थस्यझाडितिबहुलप्रबलप्रत्यवायोत्पादकः ॥ प्रत्यन्तदेशभुवो वेदविहितसद्धर्मकर्मानुष्ठानशून्यत्वेनप्रायस्ताद्भिन्नासद्धर्मानुष्ठानपरिपूर्णत्वेन वेदविहितकर्मविरुद्धकर्मानुष्ठातृजनबाहुल्येन च तत्र तद्दोषप्रसरणस्य प्राबल्यात् ॥ न चैवं प्रत्यन्तदेशवासिनां भरतखण्डीयजनैः सह भरतखण्डे संसर्गे प्रत्यन्तदेशवासिनस्तद्देशीयसंसर्गप्रत्यवायह्रासेन शुद्धतापत्तिरितस्स्वदेशगमने स्वदेशीयसंसर्गजन्यपापपरिहाराय प्रायश्चित्तस्य कर्तव्यतापत्तिश्चेति वाच्यम् ॥ इष्टापत्तेः ॥ तत्र पुनर्गमनोत्तरं प्रायश्चित्तानुष्ठानेच्छायां सत्यामपि तदनधिकारित्वेन तेन कर्तुमशक्यत्वाच्च ॥ तथा च "प्रत्यन्तवासिनः" इत्यस्य म्लेच्छदेशवासिनो जना इत्यर्थमभिप्रेत्य संसर्गस्तत्रत्यैस्सह तत्रैवात्रत्यानां प्रबलदोषावहोत्रापि खण्डे किञ्चिद्दोषावह इति वर्णितम् ॥

## अत्रायमभिसन्धिः।

संसर्गश्च—"तदन्नं तद्गृहे भुक्तिस्तदनुज्ञानिरीक्षणम् ॥

तदनुज्ञामवाप्याथ स्वयं वापि निरीक्षणम् ॥ भुक्त्वा विप्रः सपापीयान्षड्विधं शूद्रभोजनम्" इति (प्रायश्चित्तखण्डे हेमाद्रौ शूद्रसत्रभोजनप्रायश्चित्ते मनुना) "एकशय्यासनं पङ्क्तिर्भाण्डपङ्क्त्यन्नमिश्रणम्। याजनाध्यापने योनिस्तथा च सहभोजनम् ॥ नवधासंकरः प्रोक्तो न कर्तव्योधमैः सह" इति (मिताक्षरायां बृहस्पतिना २६१ श्लो० ३ ध्या) (४ ध्या० ८ श्लो० व्या० पराशरमाधवीये च) "संलापस्पर्शनिःश्वासात्सहशय्यासनाशनात्। याजनाध्यापनाद्यौनात्पापंसंक्रमतेनृणाम्।" इति च (तत्रैव देवलेन) "पृथक् पृथक् दोषजनकत्वमेषां समुदितस्यैव दोषजनकत्वम्" इति च (मिताक्षरायां ३ ध्या० २६१ श्लो०) उक्तरीत्या पूर्वोक्तैस्सह संपर्कस्य निषिद्धत्वेन तस्य समुद्रयाने नान्तरीयकतया सम्भवादुभयत्र भरतखण्डेन्यखण्डे च समानत्वेपि पक्षिणामेकजातीयत्वेपि देशभेदेन दुःखित्वसुखित्वाल्पदुःखित्वाल्पसुखित्ववत्पूर्वोक्तदृष्टान्तवच्च संसर्गस्तत्रप्रबलप्रत्यवायकारी अत्र त्वल्पप्रत्यवायकारीति ॥

ननु "ब्रह्महामद्यपःस्तेनस्तथैव गुरुतल्पगः। एते महापातकिनो यश्च तैस्सह संवसेत्" इति (मनुना ११ ध्या० ५५ श्लो०) उक्तेस्तत्संसर्गिणः कर्तव्यप्रायश्चित्तस्य

"यश्च तैस्सह संवसेत्" इति (मनुना ११ ध्या० ५५श्लो०) चोक्तवचनैः प्राप्तपतितत्वादिदोषापादकत्वस्याभावइत्यर्थस्य प्रागुक्तपराशरकालिवर्ज्यवचनादिनासिद्धावपिपापात्यन्ताभावस्यासिद्धेः ॥ अत एव "शूद्रान्नं शूद्रसंपर्कः शूद्रेण तु सहासनम्। शूद्राज्ज्ञानागमः कश्चिज्ज्वलन्तमपि पातयेत् ॥ ३४ ॥" इति "आसनाच्छयनाद्यानात्संभाषात्सहभोजनात्। सङ्क्रामन्तिहि पापानि तैलबिन्दुरिवाम्भसि॥७८॥"इति च(पराशरेण १२०शाध्या०) उक्तः पापसंसर्गतज्जन्यपातित्ययोश्च निर्देशः संगच्छते ॥ एतेन"ब्रह्महत्यासुरापानं स्तेयं गुर्वङ्गनागमः। महापातकसंज्ञानि चत्वार्येव कलौ युगे" इति "चत्वार्येव" चतुर्ग्रहणैवकाराभ्यां "संसर्गदोषो नैव स्यान्महापातकिभिःकलौ" इति "नैव" इति पदेन च (स्मृतिमुक्ताफले प्रायश्चित्तकाण्डे क्रमेण सुमन्तुकामधेनुकर्त्तृभ्यां) कलौ संसर्गदोषात्यन्ताभावस्यैव प्रतिपादनात् "यो वै समाचरेद्विप्रः" इत्युक्त्वा "त्रिरात्रं प्रथमे पक्षे द्वितीये कृच्छ्रमाचरेत्। तृतीये चैव पक्षे तु कृच्छ्रं सान्तपनं चरेत् ॥ ९ ॥ चतुर्थे दशरात्रं स्यात्पराकः पञ्चमे मतः। कुर्याच्चान्द्रायणं षष्ठे सप्तमे त्वैन्दवद्वयम् ॥ १० ॥ शुद्ध्यर्थमष्टमे चैव षण्मासान्कृच्छ्र-

यद्दोषवतावासादिस्तद्दोषवानेवायमितिनिर्णयेपि ब्रह्महत्यादिपापकृतां चतुर्णामेव कलियुगीयधर्मनिर्णयार्थं प्रवृत्तेन पराशरेण प्रायश्चित्तान्युक्तानि न तु तत्संसर्गिणः प्रायश्चित्तं किञ्चिदप्युक्तमिति तस्य प्रायश्चित्तं कलौ नास्त्येव । अत एव "कृते संभाषणादेव त्रेतायां स्पर्शनेन च । द्वापरे त्वन्नमादाय कलौ पतति कर्मणा ॥२६॥" इति "त्यजेद्देशं कृतयुगे त्रेतायांग्रामसुत्सृजेत् । द्वापरेकुलमेकं तु कर्तारं तु कलौ युगे ॥ २९ ॥" इति "संसर्गदोषः स्तेनाद्यैः" इति च ( पराशरमाधवीये धर्मज्ञसमयप्रमाणनिरूपककलिवर्ज्ये १ ध्या० ३४ ॥ श्लो व्या० ) उक्तं "कलौ कर्तैव" इति "पतति" इति ततः कर्तैव त्याज्यःइति महापातकिसंसर्गस्यकिञ्चिदपिदोषापादकत्वाभाव इति च सिद्धौ कथं चण्डालादिसंसर्गस्य कलौदोषापादकत्वं सुवचमिति चेत् ॥ न ॥ "संसर्गमाचरन्विप्रः पतितादिष्वकामतः । पञ्चाहं वा दशाहं वा द्वादशाहमथापि वा ॥ ॥७॥ मासार्द्धं मासमेकं वा मासत्रयमथापि वा॥अब्दार्धमेकमब्दं वा भवेदूर्ध्वं तु तत्समः ॥८॥" इति ( पराशरेण ४ ध्या० ) तथा "संवत्सरेण पतति पतितेन सहाचरन् । भोजनासनशय्यादि कुर्वाणः सार्वकालिकम् " इति ( मिताक्षरायां ३ ध्या० २६१ श्लो० व्या० ) तथा

माचरेत् । पक्षसंख्याप्रमाणेन सुवर्णान्यपि दक्षिणा ॥ ११॥"
इति ( पराशरमाधवीये ४ ध्या० ) अकामकृते संसर्गे तथा "पञ्चाहे तु चरेत्कृच्छ्रं दशाहे तप्तकृच्छ्रकम् । पराकस्त्वर्धमासे स्यान्मासे चान्द्रायणं चरेत् । मासत्रये प्रकुर्वीत कृच्छ्रं चान्द्रायणोत्तरम् । षाण्मासिके तु संसर्गे कृच्छ्रं त्वब्दार्धमाचरेत् । संसर्गे त्वाब्दिके कुर्यादब्दं चान्द्रायणं नरः" इति (मिताक्षरायां ३ ध्या० २६१ श्लो० सुमन्तुना ) कामकृते संसर्गे प्रायश्चित्तयोर्विधानं कलावयुक्तमेवेत्यपास्तम् ॥ एवं च समुद्रयानेपि संसर्गप्रायश्चित्तं सामान्यं स्यादेवेति केचित् ॥ तन्न ॥ "युगे युगे तु सामर्थ्यं दोषं मुनिविभाषितम् । पराशरेण चाप्युक्तं प्रायश्चित्तं विधीयते ॥ ॥ ३४ ॥ इत्यत्र (पराशरेण १ ध्या० ) "शेषं मुनिविभाषितम्" इत्युक्तरीत्या "देशयात्राविवाहेषु यत्र प्रकरणेषु च । उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ।" इति ( अत्रिणा ) "सङ्कटे विषमस्थाने दुर्गेषु परिखे तथा । भद्रपत्तनमार्गेषु यथा शुद्धस्तथैव सः" इति ( स्मृतिरत्नाकरे संवर्तेन ) चोक्तेर्यात्रामार्गपत्तनेषु स्पृष्टास्पृष्टिजन्यदोषाभावस्याशुद्धेपि शास्त्रीयशुद्धत्वप्रतिपादनेन तदभावस्यापि प्रतिपादनाद्वश्यकस्यापि संसर्गस्य दोषजनकत्वाभावसिद्धेः ॥ न चैवं " पथि चण्डालकं दृष्ट्वा कुर्यात्सूर्यावलोकनम् ।

यदि संभाषणं चैव सावित्रीं तु सकृज्जपेत् ” इति ( पराशरेण स्मृतिरत्नाकरे ) उक्तमयुक्तंस्यात् । सर्वथापि पथियाना्दौत्वयासांसर्गिकदोषाभावस्योक्तत्वादिति वाच्यम् ॥ “रथ्याकर्दमतोयानि नावः पन्थास्तृणानि च । मारुतार्केण शुध्यन्ति पक्केष्टकाचितानि च ॥ ३४ ॥ ” इति “देशभङ्गे प्रवासे वा व्याधिषु व्यसनेष्वपि । रक्षेदेव स्वदेहानि पश्चाद्धर्मं समाचरेत् ॥ ३६ ॥ ” इत्यादिना च ( पराशरेण ७ ध्या० ) उक्तेर्नौकातिरिक्तपथविषयत्वंतीर्थयात्रादिषु नौकाद्यवस्थानरूपप्रवासनानाधर्मनाशरूपदेशभङ्गस्वामिकार्यादिरूपव्यसनादिभिन्नविषयत्वं च प्रायश्चित्तस्येत्यदोषात् ॥ अत एव प्रागुक्ते संवर्त्तवचने दुर्गपदं सङ्कटपदं च सार्थकम् “उपवासैर्व्रतैः पुण्यैः स्नानसन्ध्यार्चनादिभिः ॥ ४० ॥ जपहोमदयादानैः शुध्यन्ते ब्राह्मणादयः । आकाशं वायुरग्निश्च मेध्यं भूमिगतं जलम् ॥ ४१ ॥ न दुष्यन्ति च दर्भाश्च यज्ञेषु चमसा यथा ” इति ( पराशरेण १० ध्या० ) “ ऋत्विङ्मुखसंस्पर्शेऽपि चमसानां यथा नोच्छिष्टदोषश्शास्त्रदृष्ट्या तेषां निर्लेपस्वभावत्वात्तद्वदाकाशादिष्ववगन्तव्यम् ” इति ( तत्रैव माधवीये ) चोक्तरीत्या नौकास्वपि नित्यनैमित्ति-

कादिकर्मकर्तॄणामशुद्ध्यभावाच्च । न चेदं वचनं व्यभिचारेणप्राप्तचण्डालत्ववद्ब्राह्मणीगृहप्रवेशेप्यशुद्ध्यभावबोधकमिति वाच्यम् ॥ न्यायसाम्येनैतद्विषयकत्वेपि बाधकाभावादिति केचित् ॥

ननु " वेदवेदाङ्गविदुषां धर्मशास्त्रं विजानताम् । स्वकर्मरतविप्राणां स्वकं पापं निवेदयेत् " इति ( पराशरेण ८ ध्या० २ श्लो० ) उक्तरीत्या तथाभूतानां सन्निधौ स्वपापे निवेदिते " आर्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः । जानन्तो न प्रयच्छन्ति ते तेषां समभागिनः" इति ( अङ्गिरसा माधवीये८ध्या० ३०श्लो०व्या० ) उक्तेस्तज्ज्ञैः " कर्तारं देशकालौ च प्रमाणं कारणं क्रियाम् । अवेक्ष्य च बलं चैव प्रायश्चित्तं वदेद्बुधः " इति ( विष्णुना प्रायश्चित्तपद्धतौ) उक्तरीत्या देशकालकर्त्रादिकं पर्यालोच्य " प्रायश्चित्तं तदा दद्याद्देवतायतनाग्रतः । आत्मकृच्छ्रं ततः कृत्वा जपेद्वै वेदमातरम् " इति ( पराशरेण८ ध्या० ३० श्लो० ) उक्तेर्देवालयादौ स्थलविशेषे " सुशान्तानां च विदुषां कलौ संघः प्रशस्यते । धर्मज्ञा बहवो विप्राः कर्तुमर्हन्त्यनुग्रहम् " इति ( तत्रैव देवलेन ) उक्तरीत्या संघशः समेत्यनिश्चित्य प्रायश्चित्तमनुपेक्ष्योपदेष्टव्यमेवेति "आज्ञात्वाधर्मशास्त्राणि प्रायश्चित्तं ददाति यः ।

प्रायश्चित्ती भवेत्पूतः किल्बिषं परिषद्व्रजेत्" इति ( पराशरेण व्या० श्लो० ) उक्तेरन्यैरुपादिष्टंप्रायश्चित्तं न विधेयमिति च निर्णीतम् ॥ ततश्च कलौ तथाभूतानां स्वकर्मरतविप्राणामभावः । यतः कलौ सर्वेप्यभोज्यान्ना-अभक्ष्यभक्षणाश्च॥तस्माद्ब्राह्मणविषयकं प्रायश्चित्तं व्यर्थ-मेव । स्वतः कृतप्रायश्चित्तानामपि पुनरभक्ष्यभक्षणाभो-ज्यान्नानाचाराचरणाचारत्यागपरद्रोहादिष्वेव तेषां-प्रवृत्तेस्स्वाभाविकत्वेन ततो निवृत्त्ययोग इति परा-शराद्युक्तनानाविधपरिषल्लक्षणलक्षितासुपरिषत्सु कस्या अपि परिषदोऽसंभवेनतद्विधायकाभावात्कथंद्विजानां प्रायश्चित्तं स्यात् । यथा "स्वाध्यायमधीयीत" इति ( तैत्तिरीयब्राह्मणे ) "स्वाध्यायप्रवचना-भ्यां न प्रमदितव्यम्" इति "तमध्यापयीत" इति ( तैत्तिरीयोपनिषदि १ वल्ल्यां ) चाध्ययनाध्यापन योर्विधीस्तः । "पाठमात्रावसानो हि पङ्के गौरिवसीदति" इत्यादिकानाम् ( पराशरमाधवीये कूर्मपुराणे ३८॥श्लो० व्या० १ ध्या० ) उक्तेरिदं विधिद्वयमर्थज्ञानपर्यन्तं साङ्ग-वेदानां चतुर्णां स्वशाखाया वा पाठमाचष्ट । न च कलौ कोपि तादृशो द्विजो दृश्यते । यथा वा गव्येन घृतादिना विना होमादि विहितम् न च तत्क्वापि दृश्यते । यथा वा

ध्ययनधर्मादय आश्रमधर्मादयश्च बहवो निरूपिताः । नच तेषु कस्याप्येकस्य पूर्णतया ज्ञातानुष्ठाता वा द्विजः कोपि कलौ दृश्यते । तस्माद्ब्राह्मणाः क्षत्रिया वैश्याश्च स्वस्वतेजोबलधर्माचारशून्यास्तथा शूद्रा अपि तथाविधद्विजाभावेन क्वचिदपि निग्रहानुग्रहबलमपश्यन्तो निर्भयेन स्वतन्त्राः संवृत्ताः इति सर्वेपि प्रायश्चित्तार्हाःस्युरिति चेत् ॥ न । द्विविधा ह्यधर्मस्य प्रवृत्तिः-युगप्रयुक्ता प्रमादालस्यादिप्रयुक्ता च । आद्या परिहर्तुमशक्यत्वेनानिवार्या । अन्त्या तु परिहर्तुं शक्या प्रायश्चित्तेन । तन्मात्रोद्देशेन कलौ प्रवृत्तानां सर्वज्ञपराशरप्रोक्तानां प्रायश्चित्तानामुपदेष्ट्राद्यभावेन साङ्गतया यथावदनुष्ठाना सम्भवेन वैयर्थ्यकल्पनापेक्षया कालदेशशक्तिकर्तृद्रव्योपदेष्ट्रादिसामग्र्याद्यनुरोधेन यथासंभवमनुष्ठानेन सार्थक्यकल्पनं वरं युक्तं श्रेयस्करं चेत्याद्यर्थाङ्गीकारेणादोषात्॥ तथा च "दानमेव कलौ युगे" (पराशरेण १ध्या० २२श्लो०) "कलौ संघः प्रशस्यते" (पराशरमाधवीयेदेवलेन ८ध्या० ३०श्लो०व्या०) "देशं कालं वयः शक्तिम्" ( याज्ञवल्क्येन श्लो२९४ ३ध्या०) इत्याद्युक्तिं च पर्यालोच्य मुख्यतया दानं संघंसजातीयं चव्यवस्थाप्यतत्तद्देशाद्यनुसारेणोक्तप्रायश्चित्तस्ययथा तथा वानुष्ठानेन सर्वेनिष्पापा भवन्त्विति कृपयैव

प्रणीतमिदं शास्त्रं सन्मुख्यतममास्तिकतामुत्पादयन्ना-स्तिकतां निवर्तयच्च परमोत्तममेव फलं प्रसूते ॥ एवं च "षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ॥ हुतशेषं तु भुञ्जानो ब्राह्मणो नावसीदति" इति ( पराशरेण १ ध्या० ३८ ॥ श्लो० ) उक्तैर्यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपषट्कर्मानुष्ठानेन सर्वेपि वर्णा न कदाचिदपि क्लेश-स्य नरकाद्यनुविद्धस्य पापमात्रस्यापि भाजनं भवन्ति । यतोऽत्र याजनाध्यापनप्रतिग्रहाः सामान्यतः सर्व-वर्णसम्बन्धिनो गृह्यन्ते ॥ संकोचे माना भावा दिति ब्राह्मणद्वारा क्षत्रियादस्त्रीणि यजनाध्ययनदानानि ब्राह्मणस्यानुष्ठातृत्वब्राह्मणक्षत्रियवैश्यानुष्ठापकत्वाभ्यां षडित्यनुष्ठातृत्वेनानुष्ठापकत्वेन च प्राप्तानां त्रयाणां त्रयाणां स्वस्वकर्मणां मध्ये नित्यानां नैमित्तिकानां काम्यानां प्रतिषिद्धविषयकप्रायाश्चित्तानां चोक्तरीत्या-नुष्ठानान्न कोपिदोष इति । यथा भरतखण्डे तथा द्वीपान्तरे यानेपि स्वस्वकर्मणां त्रयाणां त्रयाणां स्वस्वसमये तत्तद्देशकालसामग्र्याद्यनुसारेण साक्षात्प्रति-निधिद्वारा वानुष्ठाने बलात्कारेण धर्मप्रतिष्ठालिप्सया वा द्वीपान्तरगतौ तत्प्रयोजकसामुद्रिकनौयानप्रयोज्यस्य प्रत्यन्तवासिवासप्रयोज्यस्य वा प्रायश्चित्तस्यनावश्यकता

तेषांकेषाश्चिद्वा ॥ साक्षात्प्रतिनिधिद्वारास्वस्वकर्मानुष्ठाना-संभवेतुस्मृतिमुक्ताफलोक्तबोधायनीयस्यगोतमोक्तस्य ऋ-ग्विधोनोक्तस्यात्यल्पदोषेप्रतिवर्षंकर्तव्यतया "संवत्सरस्यैकमपिचरेत्कृच्छ्रंद्विजोत्तमः।अज्ञातभुक्तशुद्ध्यर्थंज्ञातस्यतु विशेषतः" इति(मिताक्षरायां३ध्या०८९श्लो०व्या०)वचनेन विहितस्यवाप्रायश्चित्तस्यकाशीक्षेत्रवासादेर्वासर्वपापनाश-कस्यानुष्ठानेनकर्मलोपादिप्रयोज्यदोषजालस्य निवृत्तिसं-भवान्न कोपि दोषः । तथाधर्मज्ञसमये घटकबृहन्नारदीयो-क्तस्यासंग्रह इत्येतत्पाठस्य प्रामाणिकत्वे द्वीपान्तरदर्शन-कामनयैव द्वीपान्तरं गतस्यमार्गे सर्वथा परित्यक्तधर्मसर्व-स्वस्याकृतप्रायश्चित्तस्य नास्तिकासंग्रहस्यशास्त्रान्तर-सिद्धस्यानुवादकस्तथास्तिकस्य तु कृतप्रायश्चित्तस्य श्राद्धमात्रे दैवे पित्र्ये च परिहार्यताबोधक इति दिगिति विदां कुर्वन्तु सुधिय इति शम् ॥

क्षमध्वं पण्डिताः सर्वे महान्तो गुणमण्डिताः ।
धर्ममूलजगन्मूला विज्ञप्तिः श्रूयतां मम ॥ १ ॥

धर्मं विवर्द्धयिषुणा परितो जगत्सु
पापं निनाशयिषुणा रचिता मयापि ।
सारं रिरक्षयिषुणा भरतस्य खण्डे
आस्तिक्यबीजमियमस्तु हिता द्विजानाम् ॥ २ ॥

मासत्रयेस्यारचनाकृतेरषामयाकृता ।
बह्वाशयेनपूर्णापि व्याख्योदयमपेक्षते ॥ ३ ॥